द्यापि रागादियुक्तः कपिलः सर्वदा तत्त्वज्ञानरहितत्वे सति पुंस्त्वा-
दिति[1] ॥

कपिलस्यापि कदाचिद्रागादियोगोऽस्तीति सिद्धसाधनता स्यादतस्तत्-
प्रतिज्ञायामद्यापीति पदम् । अनुत्पन्नतत्त्वज्ञानत्वादित्युक्ते महायोगि-
भिचारः । तेषां कदाचिदनुत्पन्नतत्त्वज्ञानत्वेऽप्यद्यापि रागादियोगाभा-
अतोऽद्यापीति सर्वदेति च हेतुविशेषणं कृतम् । पाषाणादिना व्या-
परिहारार्थं पुरुषत्वे सतीति विशेषणम् । ननूभयथासिद्धान्यतरासिद्ध-
णापि कस्मादसिद्धभेदौ नोदाहृतावित्याशङ्क्याह ।

त एतेऽसिद्धभेदा यदोभयवाद्यसिद्धत्वेन विवक्षितास्तदोभय-
सिद्धा भवन्ति । यदात्वन्यतरवाद्यसिद्धत्वेन विवक्षितास्तदाऽन्यतर-
सिद्धा भवन्ति[2] ॥

विरुद्धभेदास्तु । सति सपक्षे चत्वारो विरुद्धभेदाः । पक्षवि-
व्यापको यथा नित्यः शब्दः कार्यत्वात् ॥

उभयान्तोपलक्षितस्य सत्त्वमनित्यत्वम् । न पुनर्विनाशित्वम् । तद्वि-
नित्यत्वमतः प्रागभावप्रध्वंसाभावयोरपि नित्यत्वात्सपक्षत्वम् । स्वकारण-
वायस्तु कार्यत्वम् । तच्च प्रागभावादिषु नास्तीति विरुद्धत्वम् । यदि
[3]रादिमत्त्वं कार्यत्वमिष्यते तदा प्रध्वंसेऽपि गतत्वादनैकान्तिकस्यापि वि-
त्वमिति ।

सपक्षैकदेशवृत्तिः पक्षव्यापको यथा नित्यः शब्दः सामान्य-
सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वात् ॥

---

१ घ and च. add विरुद्धविशेष्यासिद्धो यथाऽनित्यः शब्दः, अ-
सति अकृतकत्वात् । विरुद्धविशेषणासिद्धो यथाऽनित्यः शब्दः अकृ-
सति अमूर्तत्वात् ।

२ and ग. ङ read तदोभयासिद्धा भवन्ति.

३ ग. घ. ङ omit वादि.

ोगिना परमाणवोऽपि बाह्येन्द्रियग्राह्यास्तत सपक्षवृत्तित्वान्न विरुद्धत्व
ह्यस्मदादिग्रहणम् । तथापि सामान्ये नित्येऽप्यस्तीति सामान्यवत्वे
तेपदम् । ग्राह्यत्व ग्रहणयोग्यत्व विवक्षितम् । तच्च सर्वशब्देऽप्यस्तीति
पापकत्वम् ।

पक्षविपक्षैकदेशवृत्तिर्यथा नित्य शब्द प्रयत्नानन्तरीयकत्वात् ॥

प्रयत्नतारतम्यानुविधायित्व प्रयत्नानन्तरीयकत्वम् । तद्वाय्वादिशब्दे नास्तीति
वेपक्षैकदेशवृत्तिरिति ।

पक्षैकदेशवृत्तिर्विपक्षव्यापको यथा नित्या पृथिवी कृतकत्वात् ॥

व्याख्यातप्रायमेतत् ।

असति सपक्षे चत्वारो विरुद्धा । पक्षविपक्षव्यापको यथाऽऽकाश
ापगुण. शब्द प्रमेयत्वात् ॥

आकाशविशेषगुणत्व साध्य शब्दव्यतिरेकेणान्यत्र नास्तीति सपक्षाभाव ।
पुत्तरानुमानेष्वपीति बोध्यम् ।

पक्षविपक्षैकदेशवृत्तिर्यथाऽऽकाशविशेषगुण शब्द प्रयत्नानन्त
ाकत्वात् । पक्षव्यापको विपक्षैकदेशवृत्तिर्यथाऽऽकाशविशेषगुण
ब्दो बाह्येन्द्रियग्राह्यत्वात् ॥

ग्रहणयोग्यत्व सर्वशब्देष्वस्तीति पक्षव्यापकत्वम । अन्यत्र तु क्वचित्सुखादौ
तीति विपक्षैकदेशवृत्तित्वम् ।

विपक्षव्यापक पक्षैकदेशवृत्तिर्यथाऽऽकाशविशेषगुण शब्दोऽ
ात्मकत्वात् ॥

सुप्तिङन्त पदम् । अपदात्मकत्व भेर्यादिशब्द एवास्तीति पक्षैकदेशवृत्ति
[ । अत्र चोदयति ।

---

[1] ड. reads कार्यत्वात् ।

विद्यमानसपक्षविपक्षः पक्षैकदेशवृत्तिर्यथा सर्वं द्रव्यमनित्यं क्रियावत्त्वात्॥

पक्षीकृतेष्वाकाशादिषु क्रियावत्त्वस्याभावादिति पक्षैकदेशवृत्तित्वम्। पक्षीकृताच्च द्रव्यादन्यत्राभावादसाधारणत्वमिति ।

अविद्यमानविपक्षो विद्यमानसपक्षः पक्षव्यापको यथा सर्वं कार्यं नित्यमुत्पत्तिमत्त्वादिति[1] ॥

सर्वकार्यस्य पक्षीकारेण नित्यत्वस्य साध्यस्य सपक्षा आकाशादयः सन्ति न तु विपक्षा अनित्यस्य सर्वस्य पक्षीकृतत्वादिति ।

अविद्यमानविपक्षो विद्यमानसपक्षः पक्षैकदेशवृत्तिर्यथा सर्वं कार्यं नित्यं सावयवत्वात् ।

अत्रापि पूर्ववत् प्रागभावप्रध्वंसाभावयोः सपक्षत्वं न पुनर्विपक्षत्वम् । अविद्यमानसपक्षो विद्यमानविपक्षः पक्षव्यापकस्तु केवलव्यतिरेकी, नासाधारणो व्याप्तिमत्त्वात् । अव्याप्तस्तु भवत्यसाधारणो यथा सर्वं प्रधानान्वितं कार्यत्वादिति । नहि प्रधानान्वितत्वेन किंचिद्बाधकमस्तीत्यर्थः । अतैव च साध्ये कुपितत्वादिति भागासिद्धा चेति ।

कालात्ययापदिष्टभेदास्तु । प्रत्यक्षविरुद्धो यथाऽनुष्णोऽग्निः कृतकत्वात् ॥

सर्वथैव गृहीतस्य निषेद्धुमशक्यत्वादुष्णत्वग्रहणमङ्गीकार्यम् । ग्रहणं च प्रत्यक्षेणाग्न्यादावेवेति प्रत्यक्षस्य बलीयस्त्वम् ।

अनुमानविरुद्धो यथा परमाणूनामनित्यत्वं मूर्तत्वात् ॥

---

[1] ग, घ, ङ, and च read उत्पत्तिधर्मकत्वात्

[2] घ adds अविद्यमानसपक्षः विद्यमानविपक्षः पक्षव्यापको यथा सर्वं कार्यं अनित्यं उत्पत्तिधर्मकत्वात् । अविद्यमानसपक्षः विद्यमानविपक्षः पक्षैकदेशवृत्तिर्यथा सर्वं कार्यमनित्यं सावयवत्वात् ॥

[3] ग ङ and च read अनित्याः परमाणवः मूर्तत्वात् ॥

यद्यप्यनुमानमत्रिणानुमानस्य बाधो न सम्भवति तथापि बलवता दुर्बलो बाध्यते प्रत्यक्षेणेव। नहि प्रत्यक्षमेवानुमानस्य बाधकम्। अन्यथा हि विवादपदेऽलातचक्रे प्रत्यक्षमपि बाधकं स्यात्। तथाह्यत्र विवादपदमलातचक्रं न भवति विशिष्टालातत्वात्। अभ्रमणावस्थालातवदिति। अनुमानमेव बाधकं, प्रत्यक्षं चाशुतरभ्रमणवशाद् भ्रान्तम्। एवमिहापि परमाणुसाधकस्याप्रामाण्ये धर्मिण एवाभावान्मूर्तत्वानुमानमाश्रयासिद्धं स्यात्। प्रामाण्ये वा तस्य पारपर्येण नित्यत्वसाधकत्वात्तेन बाधितविषयत्वमिति। तथाहि अल्पपरिमाणतरतमभावः क्वचिदाश्रये विश्रान्तः परिमाणतरतमभावत्वान्महत्परिमाणतरतमभाववदिति निरतिशयाल्पपरिमाणवस्तुसिद्धौ तस्योपादानकारणाभावादनुत्पत्तिः। कार्यापेक्षयाल्पपरिमाणानि खलूपादानानि यथा पटस्य तन्तवः। न च परिमाणुभ्योऽल्पपरिणामं किंचिदस्ति। अतः कारणशून्यवस्तुसिद्धावनित्यत्व धर्मिग्राहकप्रमाणबाधितमिति।

*आगमविरुद्धो यथा ब्राह्मणेन[1] सुरा पेया द्रवद्रव्यत्वात् क्षीरवदिति ॥*

> गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा।
> यथैवैका तथैवान्या न पातव्या द्विजोत्तमैः ॥
> सुरा वै मलमन्नानां पाप्मा च मलमुच्यते।
> तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न पिबेत्सुराम् ॥

इत्यादिरागमः। न चागमस्यैवानुमानेन बाध इति वाच्यम्। पेयत्व हि सुरायाः पीताया अपापहेतुत्वं साध्यमन्यथा सिद्धसाधनत्वप्रसङ्गः स्यात्। तच्च साध्यं दृष्टान्ते क्षीरादावागमैकसमधिगम्यम्। असदादेः तदप्रामाण्ये च दृष्टान्तस्यासिद्धावनुमानस्यानुत्थानप्रसङ्गात् तस्मादत्रागमस्यैव बलवत्वमिति।

प्रत्यक्षैकदेशविरुद्धो यथा सर्वं तेजोऽनुष्णं रूपित्वादिति ॥

---

१. ग reads ब्राह्मणेन पेय सुरादि.

सर्वस्य तेजसोऽनुष्णत्वसाधने परमाणुषु ज्योत्स्नाया वास्मदादीना प्रत्यक्षेण विरुद्धो न सम्भवति । प्रत्यक्षैकदेशविरुद्धो प्रत्यक्षैकदेशविरुद्ध इत्यर्थ ।

अनुमानैकदेशविरुद्धो यथा नित्याश्रया द्रवत्वरूपरसगन्धस्पर्शा नित्या अप्रदेशवृत्तिसमानजात्यारंभकत्वे सति परमाणुवृत्तित्वात् तद्गतैकत्ववदिति ॥

परमाणुवृत्तित्वादित्युक्ते सयोगेन व्यभिचार तन्निवृत्त्यर्थमप्रदेशग्रहणम्। तथापि द्वित्वादौ व्यभिचारस्तत्परिहाराय समानजात्यारम्भकत्वे सतीति पदम्। तथापि द्व्यणुके व्यभिचारस्तन्निवृत्त्यर्थं गुणे सतीति विशेषणमूह्यम् । अत्र च नैमित्तिकद्रवत्वपार्थिवपरमाणुरूपादिष्वेव नित्यत्वमनुमानेन विरुद्ध्यते साम्सिद्धिकद्रवत्वसलिलादिपरमाणुरूपादिष्विति । तथाहि पार्थिवपरमाणुरूपर सगन्धस्पर्शा अग्निसयोगजा पार्थिवविशेषगुणत्वाद् घटरूपादिवत् पार्थिवतैज सपरमाणुद्रवत्व पाकज पार्थिवतैजसद्रवत्वात् सर्पि सुवर्णादिद्रवत्ववत् ।

आगमैकदेशविरुद्धो यथा सर्वेषा देवर्षीणा शरीराणि पार्थिवानि शरीरत्वादस्मदादिशरीरवदिति ॥

कनाचद्देवानामृषीणा च शरीराणि आप्यतैजसवायवीयानि श्रूयन्ते तस्मा दागमैकदेशविरुद्धोऽय हेतु ।

प्रकरणसमस्योदाहरण यथाऽनित्य[1] शब्द पक्षसपक्षयोरन्यतरत्वात्सपक्षवत् ॥

एक एवाय हेतुरनित्यत्व इव नित्यत्वेऽपि समान इति ।

नित्य शब्द पक्षसपक्षयोरन्यतरत्वात्सपक्षवदिति[2] । एकत्र तुल्य लक्षणविरुद्धहेतुद्वयोपनिपातो विरुद्धाऽव्यभिचारीत्येके ॥

एक इति वयमित्यर्थ । अन्ये तु प्रकरणसमोऽयमित्याहु । भिन्नविषय हेतुद्वयनिपातो विरुद्धाऽव्यभिचारी माऽभूदित्येकत्रेतिपदम् । तथापि नित्य

१ च omits अनित्य शब्द सपक्षवत् ।
२ च reads गगनवत् ।

शब्दः कार्यत्वाद् घटवद् गुणः शब्दः कर्मव्यतिरिक्तसामान्यवत्त्वे सति सामान्यवतामनाधारत्वाद्रूपादिवत्यनयोर्विरुद्धाव्यभिचारित्वं स्यात् तन्निषेधाय विरुद्धग्रहणम् । एवमपि नित्यः शब्दः प्रमेयत्वादनित्यः शब्दः कार्यत्वादित्यनयोस्तथात्वं स्यादित्यतस्तुल्यलक्षणग्रहणम् । प्रकृतप्रमेयस्यानैकान्तिकत्वात् तुल्यलक्षणत्वं निरूपाऽऽत्मकतुल्यलक्षणाभावादुदाहरति—

यथा नित्यमाकाशममूर्तद्रव्यत्वादात्मवत्, अनित्यमाकाशमस्मदादिबाह्येन्द्रियग्राह्यगुणाऽऽधारत्वाद् घटादिवत् ॥

ननु वस्तुनो द्वैरूप्यासंभवादवश्यमन्यतरानुमानं सुनष्टमेव ततश्चासिद्धादिदूषणदुष्टत्वात्तेष्वेवान्तर्भावो भविष्यति किं हेत्वाभासाऽभ्युपगमेनेत्याऽऽशंक्याऽऽह ।

स खलु पुरुषविशेषमपेक्षमाणो हेत्वाभासो भवत्यन्यतरासिद्धवदिति॥

यथा परं प्रति असिद्धं हेतुं यः समर्थयितुमशक्तस्तदपेक्षयाऽन्यतरासिद्धो हेत्वाभासो भवति, यथा वा दूषणान्तरोद्भावनासमर्थस्य प्रकरणसमः तथा-दूषणान्तरोद्भावनायां विकलशक्तेर्विरुद्धाव्यभिचारीति । यदा त्वन्यतरानुमानस्य धर्मिग्राहकप्रमाणबाधमुद्भावयति तदा कालात्ययापदिष्टदोषदुष्टं भवत्येकमन्यतरत्प्रमाणमिति । अत्र पुनरनित्यत्वसाधकानुमानमेव धर्मिग्राहकप्रमाणबाधितम् । तथाहि व्यापकमेवाऽऽकाशमिति प्रत्यक्षपरिच्छेदे समर्थितम् । अतः समानजातीयोऽपादानकारणाभावादाकाशमनुत्पत्तिधर्मकं सिद्धमिति कथं तदनित्यं भविष्यतीति ।

हेतुप्रसंगेन हेत्वाभासानभिधायोदाहरणाऽऽख्यमवयवमाह—

सम्यग्दृष्टान्ताभिधानमुदाहरणम् ।

सम्यगित्यभिधानविशेषणं भिन्नं पदम् । तच्चाव्याप्त्यभिधानादेर्निरासार्थम् उदाहरणभेदमाह—

---

१ ङ reads अमूर्तत्वात् । २ ग, घ, ङ and च add एवं before अनित्य ३ च reads ग्राह्यविशेषगुण०

तद्द्विविधम् । साधर्म्यवैधर्म्यभेदात् ॥

साधर्म्यवैधर्म्ये एव भेदस्तस्माद्द्विविधस्यापि लक्षणोदाहरणे दर्शयति ।

तत्रान्वयमुखेन दृष्टान्ताभिधानं साधर्म्योदाहरणं यथाऽनित्यः शब्दस्तीव्रादिधर्मोपेतत्वात् । यद्यत्तीव्रादिधर्मोपेतं तत्तदनित्यं दृष्टं यथा सुखादीति । व्यतिरेकमुखेन दृष्टान्ताभिधानं वैधर्म्योदाहरणं यथा यदनित्यं न भवति तत्तीव्रादिधर्मोपेतमपि न भवति यथाऽऽकाशमिति । एतेन उदाहरणाभासानामनुदाहरणत्वमुक्तं भवति ॥

दृष्टान्तग्रहणव्याप्तेः प्रमाणोपपन्नत्वं सूचयितुं न पुनरवश्यमुदाहरण वाच्यमिति नियमयितु । शेषं स्पष्टम् । उदाहरणलक्षणाभिधानादुदाहरणाभासा निरस्ता भविष्यन्तीत्यभिप्रायेण तल्लक्षणमवातरभेदं च सोदाहरणमाह ।

उदाहरणलक्षणरहिता उदाहरणवदाभासमाना उदाहरणाभासास्ते चानेकप्रकाराः तथा चाऽनित्यं मनो मूर्तत्वादित्येतस्मिन्प्रयोगे सर्वे उदाहरणाभासा उच्यन्ते इति ॥

विस्तारभीत्येति शेषः ।

यन्मूर्तं तदनित्यं यथा परमाणुरिति साध्यविकलः ॥

साध्यस्य अनित्यत्वस्य परमाणावभावात् ॥

यथा कर्मेति साधनविकलः ॥

साधनस्य मूर्तत्वस्य कर्मण्यभावात् ।

यथाऽऽकाशमित्युभयविकलः ॥

उभाभ्यां साध्यसाधनाभ्यां विकलः दृष्टान्ताभास इति सर्वत्र सबंधः ।

स्पष्टम् ।

---

१ घ, and च read साधर्म्योदाहरणं, वैधर्म्योदाहरणं चेति ।

२ क omits एतेन....भवति ।

३ ग, घ, ङ, च read अनित्य दृष्ट

यथा खरविषाणमित्याश्रयविकलः ॥ स्पष्टम् ।

घटवदित्यव्याप्त्यभिधानम् ॥

न व्याप्त्यभिधानमव्याप्त्यभिधानम् । यन्मूर्तं तदनित्यमिति वचनमन्तरेण व्याप्तेरप्रतीतेः ।

यदनित्यं तन्मूर्तं दृष्टं यथा घट इति विपरीतव्याप्त्यभिधानमिति ॥

यत्र साधनजातीयमस्ति तत्र साध्यजातीयमवश्यमस्तीति हि वक्तव्यम् । अन्यथाभिधानं तु विपरीताव्याप्त्यभिधानम् ।

एतौ वचनदोषौ ॥

अव्याप्त्यभिधानविपरीतव्याप्त्यभिधानरूपौ वचनदोषौ । आद्याश्चत्वारोऽर्थदोषा इति भावः ।

यदनित्यं न तन्मूर्तमपि न भवति यथा परमाणुरिति साधनाव्यावृत्तः ॥

साधन मूर्तत्व यस्माद्दृष्टान्ताभासाद्व्यावृत्तमसौ साधनाव्यावृत्तः । साधनाव्यावृत्त यस्मिन्निति वा साधनाव्यावृत्तः । उदाहरणाभास इतिसंबधात् सर्वत्र पुल्लिङ्गनिर्देशः ।

यथा कर्मेति साध्याऽव्यावृत्तः, यथा घट इत्युभयाऽव्यावृत्तः, यथा खपुष्पमित्याश्रयहीन इति ॥

व्यक्तमेतत् ।

---

१ ग reads शशविषाण; ङ reads खपुष्पं
२ क, घ, ङ, च read हीनः
३ ग, ङ, च omit यथा घटः
४ ङ, च read न भवति

आकाशवदित्याप्त्यभिधानम् ॥

यदनित्य न भवति तन्मूर्तमपि न भवतीत्यभिधानमन्तरेण व्याप्तेरप्रतीतेः

यद्[2] मूर्तं न भवति तदनित्यमपि न भवति यथाकाशमिति[3] विपरीतव्याप्त्यभिधानम् ॥

यत्र साध्यं नास्ति तत्र साधनमपि नास्तीति तत्तु व्यतिरेके वक्तव्येऽन्यथाभिधानं साधनात्साध्यसिद्धावङ्गं न भवतीति दोष एव ।

एतौ च वचनदोषाविति ॥

अव्याप्त्यभिधानविपरीतव्याप्त्यभिधानलक्षणौ ।

अत्राद्याः षट् साधर्म्योदाहरणाभासा, इतरे षड्वैधर्म्योदाहरणाभासाः ।

अन्ये तु सन्देहद्वारेणापरानष्टावुदाहरणाभासान्वर्णयन्ति ॥

सन्देह एव द्वारमुपायस्तेन ।

संदिग्धसाध्यो यथा महाराज्यं करिष्यत्ययं सोमवंशोद्भूतत्वाद्विवक्षितराजपुत्रवदिति ॥

सोमवंशोद्भूतत्वेन निश्चित एव राज्यमकुर्वाणो दृष्टान्तीकृतः । न चासौ राज्यं करिष्यतीति निश्चयोऽस्त्यतः संदिग्धसाध्य एव दृष्टान्ताभासः ।

संदिग्धसाधनो यथा नायं सर्वज्ञो रागादिमत्त्वाद्[4]न्यपुरुषवदिति ॥

अत्रापि येनकेनचित्प्रकारेण निश्चितोऽसर्वज्ञो रागादिमत्त्वेनानिश्चितो दृष्टान्तीकृतः ।

संदिग्धोभयो यथा गमिष्यत्ययं स्वर्गं विवक्षितः पुरुषः समुपार्जितशुक्लधर्मत्वाद्[5]देवदत्तवदिति ॥

---

१ च reads यथाकाश २ क and ग read यदमूर्तं ३ क omits यथाकाश ४ ग, घ, ङ च read रथ्यापुरुष० ५ घ, ङ read अपरिचित देवदत्तपुत्रवत्

अत्र तु संदिग्धमुभयं स्वर्गगमनं समुपार्जितशुक्लधर्मत्वं च यस्य स संदिग्धोभय पुरुषो दृष्टान्तीकृत ।

संदिग्धाश्रयो यथा नायं सर्वज्ञो बहुवक्तृत्वाद्भविष्यद्देवदत्तपुत्रवदिति ॥

भविष्यद्देवदत्तपुत्रे प्रमाणाभावात्संदिग्धाश्रय उदाहरणाभास ।

संदिग्धसाध्याव्यावृत्तो यथा यो महाराज्यं न करिष्यति स सोमवंशोद्भूतोऽपि न भवति यथाऽन्यो राजपुरुष इति ॥

साध्यमव्यावृत्त यस्मादसौ साध्याव्यावृत्त संदिग्धश्चासौ साध्याव्यावृत्तश्च संदिग्धसाध्याव्यावृत्त सोमवंशादन्यत्रोद्भूतस्याऽपि महाराज्याकरणे प्रमाणाभावात् ।

संदिग्धसाधनाव्यावृत्तो यथा यस्तु सर्वज्ञ स रागादिरहितो यथा समस्तशास्त्राभिज्ञ पुरुष इति ॥

समस्तशास्त्राभिज्ञस्य रागादिरहितत्वे प्रमाणाभावात् संदिग्धसाधनाव्यावृत्त इत्यर्थ ।

संदिग्धोभयाव्यावृत्तो यथा य स्वर्गं न गमिष्यति स समुपार्जितशुक्लधर्मोऽपि न भवति यथा दु स्थ पुरुष इति ॥

दु स्थस्याऽपि पुरुषस्य स्वर्गगमने शुक्लधर्माभावे च प्रमाणाभावं इति भाव ।

संदिग्धाश्रयो[1] यथा य सर्वज्ञ स बहुवक्ताऽपि न भवति यथा भविष्यद्देवदत्तपुत्र ॥

स्पष्टमेतत् । चतुर्थावयवस्य लक्षणमाह ।

दृष्टान्ते प्रसिद्धाऽविनाभावस्य साधनस्य दृष्टान्तोपमानेन पक्षे व्याप्तिव्यापक वचनमुपनय ॥

---

१ क reads संदिग्धाश्रयाव्यावृत्तो यथा

साधनस्य च पक्षे व्याप्तिख्यापक वचनमुपनय इत्युक्ते हेतुरूपवचनस्याप्युपनयप्रसगस्तन्निवृत्त्यर्थं दृष्टान्तोपमानेनेतिपद तच्चोपलक्षणम्। तेन दृष्टान्तोपमानेन वा दृष्टान्तवैधर्म्येण वा सहेत्यर्थः। शेष स्वरूपकथनार्थं।

स द्विविधः ॥

द्वैविध्य दर्शयति।

तथा च तीव्रादिधर्मोपेत शब्द इति साधर्म्योपनय । न च तथा तीव्रादिधर्मोपेत शब्दो न भवतीति वैधर्म्योपनयः ॥

यद्यपि द्वौ नञौ प्रकृतमर्थं गमयत इति न्यायेनार्थभेदो नास्ति तथाप्युक्तिभेदादुपनयभेदः, उक्तिभेदोऽप्युदाहरणभेदादिति।

उपनयानन्तरम् ॥

निगमन व्याख्यायत इति शेष। तदाह।

सहेतुकं प्रतिज्ञावद्वचनं निगमनं तस्मादनित्य एवेति ॥

सहेतुकमिति तस्मादित्यनुमानहेतुकमित्यर्थः, प्रतिज्ञावद्वचनमिति तत्समानं न तु प्रतिज्ञैव। परेणानिश्चितस्य सिसाधयिषितस्याभिधान हि प्रतिज्ञा। निगमन तु प्रतिज्ञातार्थसाधकहेत्वभिधानेन निश्चितस्यार्थस्याभिधानमिति। एव तर्हि व्याप्तिलिङ्गाभिधानादेव साध्यसिद्धेर्व्यर्थं निगमनमित्याशङ्क्याऽऽह।

न चेदमनर्थकम्। साध्यविरुद्धाभावप्रतिपादकप्रमाणसूचकत्वादस्य ॥

साध्यमानित्यत्वादिस्तस्य विरुद्धो यो नित्यत्वादिस्तस्याभावोऽनुपपन्नत्व तस्य प्रतिपादक यत् प्रमाण तस्य सूचकत्वात्। तस्मादनित्य इत्युक्तम्। सिद्धे सत्यारम्भो नियमार्थ इति न्यायात्सिद्धो न भवति, तत्र प्रमाणाभावाद्बाधक सद्भावाच्चेति प्रतीतिः। तदपि किमर्थमित्याशङ्क्याऽऽह।

---

१ च om. न च २ ग, ङ. च read प्रतिज्ञावचन, घ reads प्रतिज्ञायाः पुनर्वचन ३ after this ङ adds तदपि द्विविधम्—साधर्म्य वैधर्म्यभेदात् ४ च reads इति साधर्म्यनिगमन.

न च तदन्तरेण साध्यावधारणमुपपद्यते ॥

तदन्तरेण विपक्षबाधकप्रमाणमृतरेण साध्यस्यावधारणं निश्चयो नोपपद्यत इत्यस्मिन्नर्थे सूत्रसंवादमाह ।

तथा चोक्तम् 'विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः' (गौ. सू. १-१-४१) इति ॥

विमृश्य संशयं कृत्वा निर्णयः पुरुषेण क्रियते । काभ्यां पक्षप्रतिपक्षाभ्यां, पक्षविषय साधन प्रतिपक्षविषय दूषणमुपचारेण पक्षप्रतिपक्षशब्देनोक्तम् । किं च निगमनमसाधनांगमिति चत्वारो(?) बौद्धस्य स्ववृत्तिविरोधा इत्याह ।

निगमनाभिधानमसाधनांगमित्यभ्युपगम्य बाधकं ॥ प्रमाणमभ्युपगच्छतो निग्रहस्थानं प्रसज्यते निगमनार्थत्वाद् बाधकस्येति ॥

निगमनार्थत्वादिति निगमनप्रयोजनत्वादित्यर्थः । क्षणिकत्वादौ सत्त्वादिति साधनमभिधाय पश्चात् "असन्तोऽक्षणिकास्तस्य क्रमाक्रमविरोधत" इत्यादिना बाधक प्रमाण कुर्वतो बौद्धस्य स्ववृत्तिविरोधान्निग्रहः स्यादित्यर्थः ।

ननु सत्यपि निगमनवचने विप्रतिपद्यमानस्य परितोषाभावाद्बाधकमेवाभिधीयतां किमनेनेत्याशंक्याह ।

निगमनार्थविप्रतिपत्तौ हि 'बाधकप्रमाणोपन्यासो युक्त', हेत्वर्थविप्रतिपत्तौ तत्साधकप्रमाणोपन्यासवदिति ॥

इदानीं पञ्चावयवरूपानुमानस्तुतिद्वारेण कथालक्षणं प्रपञ्चयति ।

सोऽयं परमो न्यायो विप्रतिपन्नपुरुषप्रतिपादकत्वात्कथाप्रवृत्तिहेतुत्वाच्च ॥

सोऽयं पञ्चावयवरूपो न्यायः परम उत्कृष्टः । का पुनरियं कथेत्याशंक्याह ।

वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहः कथा ॥

साधनदूषणरहितपक्षप्रतिपक्षपरिग्रहमात्रं कथा मा भूदिति वादिप्रतिवादिग्रहणम् । यथायोगं साधनदूषणैर्वादिप्रतिवादिनोरित्यर्थः ।

भेदमाह ।

सा द्विविधा वीतरागकथा विजिगीषुकथा चेति ॥

तयोर्लक्षणमाह

यत्र वीतरागो वीतरागेणैव सह तत्त्वनिर्णयार्थं साधनोपालंभौ करोति सा वीतरागकथा वादसंज्ञयैवोच्यते ॥

यथा विजिगीषुकथाया वाद इति सामान्यसंज्ञा जल्प इति च विशेषसंज्ञा दृष्टा न तथात्र विशेषसंज्ञांतरमस्तीत्यर्थः । वादसंज्ञा च सकलकथासाधारणीति लोकव्यवहाराद्विज्ञायते तथा जल्पे च क्रियमाणे वाद कुरुव इति व्यवहरन्ति । वीतरागकथा वादसंज्ञयैवोच्यत इत्यत्र सूत्रकारवचनं दर्शयति ।

तथा चोक्तम्, प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः (गौ.सू १-२-१) इति ॥

साध्यते पक्षोऽनेन साधनं, उपालभ्यते दूष्यते प्रतिपक्षसाधनं येन स उपालम्भ इति प्रमाणैस्तर्केण वा विपर्यीकृतसामर्थ्यौ साधनोपालम्भौ यत्र स प्रमाणतर्कसाधनोपालम्भः । पक्षप्रतिपक्षात्मकत्वं कथात्रयेऽप्यस्तीति तत्रातिव्याप्तिर्माभूदिति प्रमाणेत्यादिपदम् । तत्र साधनोपालम्भग्रहणेन वितण्डातो व्यवच्छेदः । नहि वितण्डायामुभाभ्यामपि साधनमुपालम्भश्चोच्यते । जल्पव्यवच्छेदस्तु प्रमाणतर्कग्रहणेन । कथमनेन साधनेन स्वपक्षः साधयितुं शक्यः, अनेन चोपालम्भेन प्रतिपक्षसाधनं दूषयितुं शक्यमिति प्रमाणेन निश्चितसामर्थ्यौ तर्केण वा विपरीकृतसामर्थ्यौ साधनोपालम्भौ वादे कार्यौ नान्यथेति शुद्धाभिसंधित्वं पुरुषयोर्नियम्यते । न चैवं जल्पे तत्र ह्येकान्तपराजयावस्थायां छलादिप्रयोगस्यापि सूचकत्वात् । तथा च वक्ष्यति । सिद्धान्ताविरुद्ध इत्यादि पदं तु शिष्यशिक्षार्थम् । सिद्धान्ताविरुद्ध एव वादः कार्यो न पुनः शुष्कतार्किकवदीश्वरस्य शरीराभ्युपगमेन । तथा स्वपक्षसाधनं परपक्षदूषणं साधनसमर्थनं दूषणसमर्थनं शब्ददोषवर्जनमित्येतैः पञ्चभिरवयवैरुपपन्नः कार्यो येनाभिमतसिद्धिः स्यात् । शब्ददोषास्तु निरर्थकातिद्रुतोच्चारणाप्रसिद्धप्रयोगादयः । स वादो द्विविधः सप्रतिपक्षोऽप्रतिपक्षश्चेति । तत्रापि सूत्रं दर्शयति ।

तं प्रतिपक्षहीनं वा कुर्यात्प्रयोजनार्थमर्थित्वे सति ( गौ. सू. ४-२-४९ ) इति ॥

तं वादं प्रतिपक्षविषयसाधनं प्रतिपक्ष उपचारात्। तेन हीनमपि वा कुर्यात् प्रयोजनार्थं तत्त्वज्ञानार्थमर्थित्वे सति। अस्य सूत्रस्य तात्पर्यार्थमाह।

प्रयोजनार्थित्वेन[1] यथा शिष्यो गुरुणा सह प्रश्नद्वारेणैवेत्यर्थः ॥

वादं करोति न पुनः प्रतिपक्षसाधनाभिधानद्वारेणेति शेषः। विजिगीकथालक्षणमाह।

यत्र विजिगीषुर्विजिगीषुणा सह लाभपूजाख्यातिकामो जयपराजयार्थं प्रवर्तते सा विजिगीषुकथा। वीतरागो वा परानुग्रहार्थं ज्ञानांकुरसंरक्षणार्थं च प्रवर्तते, सा चतुरंगा वादिप्रतिवादिसभापतिप्राश्निकांगा विजिगीषुकथा जल्पवितंडासंज्ञयोक्ता ॥

जयपराजयार्थमिति स्वस्य जयार्थं परस्य पराजयार्थं परानुग्रहार्थमिति परेषां शिष्यादीनां वेदप्रामाण्यमोक्षादौ निश्चयोत्पादनद्वारेण मोक्षशास्त्रादावाचार्यादौ श्रद्धोत्पत्तिद्वारेण वाऽनुग्रहः ज्ञानांकुरस्यात्मस्थस्य शिष्यात्मस्थस्य संरक्षणार्थं च बौद्धादिदुष्कृकेभ्यः। सा जल्पसंज्ञया वितंडासंज्ञया चोक्तेत्यर्थः अत्र सूत्रसंवादमाह।

तथा चाह। तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितंडे बीजप्ररोहसंरक्षणार्थं कंटकशाखावरणवद् ( गौ. सू ४-२-५० ) इति ॥

उभयरूपाया अपि विजिगीषुकथाया लक्षणं सौत्रमेवेत्याह।

यथोक्तोपपन्नच्छलजातिनिग्रहस्थानसाधनोपालंभो[2] जल्पः ( गौ. सू. १-२-२ ) इति ॥

---

१ क omits प्रयोजनार्थित्वेन.

२ ग घ add लक्षण after यथोक्त

यथोक्ते वादलक्षणे यदुपपन्न योग्य यथोक्तोपपन्न तेनोपपन्न समद्वो यथोक्तोपपन्न इत्येकस्योपपन्नशब्दस्य लोपो द्रष्टव्य सुगत्वात्। उपपन्न च साधनोपालम्भवान्पक्षप्रतिपक्षपरिग्रह इति । प्रमाणतर्कग्रहण त्वनुपपन्न शुद्धाभिसंधिनैव जल्प कार्य इति नियमाभावात्। सिद्धि साधन, उपालम्भ नमुपलम्भ, छलजातिनिग्रहस्थानैस्तु साधनोपालम्भो यत्र स तथाक्त । यद्यपि छलादीनामसदुत्तरत्वात्परमार्थतस्तै स्वपक्षसाधन प्रतिपक्षोपालम्भश्च कर्तुं न शक्यते तथापि भ्रान्ताना साधनापालम्भबुद्धिजननात्साधनोपालम्भहेतुत्वमुक्त मिति। अथवा प्रमाणेनैव साधन उपालम्भे च क्रियमाणे तद्विघाताय परप्रयु क्ताना छलादीनामनुद्भावने प्रमाणेषु दूषितत्वबुद्ध्या साधनमुपालम्भन च न स्याद्, उद्भावने तु छलादीन्येवासद्दूषणत्वेन प्रतीतानि साधनोपालम्भहेतुना प्रमाणानामगमाव भजन्त इति पारम्पर्येण छलादीना तद्धेतुत्वम्।

स प्रतिपक्षस्थापनाहीनो वितडा ॥

स वादो जल्पश्च प्रतिपक्ष स्थाप्यते यथा सा प्रतिपक्षस्थापना प्रमाण तया विहीनो वितडा, न पुन प्रतिपक्ष एव नास्तीत्यर्थ एव च वीतराग वितडा विजिगीषुवितण्डेति द्विविधा वितडा। एतद्य त प्रतिपक्षहीनमपि वा कुर्यात् (गौ सू ४ २ ४९) इत्ति सूत्रेणापि सूचितम्। अज्ञातस्वरूपाणा छल दीना न साधनोपालम्भहेतुत्वेनापि स्ववाक्ये पारवर्जन परवाक्येषूद्भावन वा कर्तुं शक्यमिति तेषा लक्षणमाह।

वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ॥ (गौ. सू १-२-१०)

अर्थस्य विरुद्धत्वेन कल्पनमर्थविकल्पस्तस्योपपत्त सम्भवस्तया वचनस्य विघातो दूषण यत्तच्छलम्। उदाहरण तु विशेषलक्षण भविष्यति। विभागमाह।

तत्त्रिविधम्। वाक्छल सामान्यछलमुपचारछल चेति॥(गौ सू १-२-११)

त्रैविध्य लक्षणत्रैविध्यादत आह।

तत्र यथाऽविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम्॥ (गौ सू १-२ १२)

अनेकार्थाभिधायि पद वाक्य चात्र विशेष, तत्रशार्थाभिधानाय प्रयोग

एवोपचारादविशेषाभिहितेऽर्थे इत्युक्तम् । तस्मिन्सति वक्तुरभिप्रायादर्थांतर कल्पना यत्र वचनविघाते तद्वाक्छल वाङ्निमित्तत्वात् । यद्यपि वाङ्निमित्त सर्वमपि छल तथाप्यन्यत्र सामान्योपचारयोः प्रधानत्वात्तेन व्यपदेशः । उदाहरणमाह ।

नवकंबलोऽयं माणवक इत्युक्ते, छलवाद्याह कुतोऽस्य नवकंबला इति॥

नूतनकबलत्वमत्र वक्तुर्विवक्षितम्, प्रतिवादी तु नवसख्याककबलवत्व विवक्षितमित्यारोप्यासभवेन दूषयति । तस्य परिहारमाह ।

तस्याप्रतिपत्तिलक्षणं निग्रहस्थानं वाच्यम् । नव· कंबलोऽस्येति वक्तुरभिप्रायापरिज्ञानादिति ॥

नवकबलवत्त्वस्य प्रत्यक्षत्वाच्च वक्तुरभिप्रायापरिज्ञानमिति । तत्राह

" उत्तरापरिज्ञानाद्वेति "

अप्रतिपत्तिलक्षण निग्रहस्थान वाच्यमित्यनुवर्तते । दूषणान्तरमाह सत्यम् । सिद्धसाध्यतेत्युत्तरस्यापरिज्ञानात् ।

विप्रतिपत्तेर्वा विपरीतज्ञानात् ॥

विपरीतस्य वक्तुरभिप्रायादन्यस्यार्थस्य नवसख्यासंबाधित्वस्य परिज्ञानात् ।

संभवतोऽर्थस्यातिसामान्ययोगादसद्भूतार्थकल्पना सामान्यच्छलम् (गौ. सू. १-२-१३) ॥

ब्राह्मणादेश्चतुर्वेदाभिज्ञत्वलक्षणो धर्मः प्रायेण सभवतीति सभवद्देनोक्तः । तस्यातिव्याप्तिसामान्यमतिसामान्य तेन योगादसद्भूतार्थकल्पना यत्रवचनविघाते निमित्त तत्सामान्यनिमित्तत्वात्सामान्यच्छलमिति । अत्रोदाहरणमाह ।

अहो नु खल्वयं ब्राह्मणश्चतुर्वेदाभिज्ञः इत्युक्ते केनचिन्न्यायवाद्याह, किमत्राश्चर्यं संभवति हि ब्राह्मणे चतुर्वेदाभिज्ञत्वमिति । अत्र छलवाद्याह । न । व्रात्येनानैकान्तिकत्वात् ॥

चतुर्वेदाभिज्ञत्वे ब्राह्मणत्वं लिङ्ग विवक्षितमिति मत्वानेनानैकान्तिको दर्शितः । परिहरति ।

तस्यापि पूर्ववन्निग्रहस्थानं वाच्यम् ॥

अप्रतिपत्तिलक्षणमभिप्रायापरिज्ञानादुत्तरापरिज्ञानाद्वा विप्रतिपत्तेश्च विपरीतहेतुत्वस्य परिज्ञानादिति । चोदयति ।

कस्मात् ।

परिहरति ।

हेतुत्वेनाऽविवक्षितत्वात् । किं तर्हि । ब्राह्मणत्वे सति चतुर्वेदाभिज्ञत्वमाश्चर्यकारणं न भवतीत्यभिप्रायः सुक्षेत्रे शालिसम्पत्तिवदिति ॥

क्षत्रियादावेवाश्चर्यकारणं विद्याचरणसम्पन्नः पुनर्ब्राह्मण इति सर्वोऽपि ब्राह्मणजातिः स्तूयते तत्र श्रद्धोत्पादनार्थमवज्ञापरिहारार्थं चेत्यर्थः ।

उपचारप्रयोगे मुख्यार्थकल्पनया प्रतिषेध उपचारच्छलम्, यथा मञ्चाः क्रोशन्तीत्युक्ते च्छलवाद्याह पुरुषाः क्रोशन्ति न मञ्चास्तेषामचेतनत्वादिति ॥

क्षेत्रपरिरक्षणार्थं कृतः काष्ठमयश्चतुःस्तम्भरूपो मञ्चः । छलवादिनो दूषणमाह ।

तस्यापि पूर्ववन्निग्रहस्थानं वाच्यम् । उभयथाऽपि लोके शास्त्रे च शब्दप्रयोगदर्शनादिति ॥

पराभिप्रायापरिज्ञानादुत्तरापरिज्ञानाद्वाऽप्रतिपत्तिलक्षणं निग्रहस्थानं विप्रतिपत्तिर्वा परेणाविवक्षितस्य मुख्यार्थस्य स्वीकारेण दूषणात् । उभयथा मुख्यप्रकारेण गौणप्रकारेण लोके शास्त्रे च प्रयोगदर्शनात् । अतो गौणशब्दप्रयोगे परेण कृते मुख्यार्थस्य प्रतिषेधात्वमनीषिकाप्रतिषेधोऽसौ न परोपालम्भ इति । जातिनिग्रहस्थानयोर्लक्षणमाह ।

प्रयुक्ते हेतौ समीकरणाभिप्रायेण प्रसङ्गो जातिः । पराजयनिमित्तं निग्रहस्थानम् ॥

प्रसङ्गः प्रतिषेधः । स च प्रत्यक्षाभासादावस्तीति न व्याप्तौ जातिरतः प्रयुक्ते हेताविति पदम् । तस्याप्यसिद्धत्वादिप्रसङ्गः प्रयुक्ते हेतौ भवतीति.

तद्व्यवच्छेदाय समीकरणाभिप्रायेणेति पदम्। असिद्धत्वादिचोदनं तु परपक्षप्रतिषेधाय न तु स्वपक्षस्य परपक्षेण समीकरणाभिप्रायेण। यद्यपि प्राप्त्यप्राप्तिसमादिष्वेतल्लक्षणं नास्ति तेषां परपक्षेण समीकरणाभिप्रायेणाप्रवृत्तेस्तथापि बाहुल्यापेक्षयेदं लक्षणं विवक्षितम्। अपक्षव्याप्त्यतिप्रसंगो जातिरिति तु निर्दिष्टं सूत्रकारेण। उक्तानामनुक्तानां चानयोर्भेदानां निरवशेषेणानभिधानहेतुमाह।

बहवश्चानयोः सूक्ष्मा भेदास्तेषां कियन्तो भेदा लक्षणोदाहरणाभ्यां प्रदर्श्यन्ते ॥

तेषामिति निर्धारणे षष्ठी तेषां मध्ये इत्यर्थः।

साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ (गौ. सू. ५-१-२) ॥

साधर्म्यवैधर्म्याभ्यामन्वयव्यतिरेकाभ्यामुपसंहारे साध्यस्येति शेषः। तद्धर्मस्य साध्यधर्मस्यानित्यत्वादेर्विपर्ययो नित्यत्वादिस्तस्योपपत्तिः सिद्धिस्तदर्थे तद्धर्मविपर्ययोपपत्तेरिति तादर्थ्ये षष्ठीविधानात्साधर्म्यवैधर्म्याभ्यामेव समीक्रियमाणौ प्रसंगौ साधर्म्यवैधर्म्यसमौ। अनयोरुदाहरणमाह।

यथाऽनित्यः शब्दः कृतकत्वाद् घटवदित्युक्ते जातिवाद्याह यद्यनित्यघटसाधर्म्यात्कृतकत्वादनित्यः शब्द इष्यते नित्याकाशसाधर्म्यादमूर्तत्वान्नित्यस्तर्हि प्राप्नोति, यदि च नित्याकाशवैधर्म्यात् कृतकत्वादनित्य इष्यते, अनित्यघटवैधर्म्यादमूर्तत्वात्तर्हि नित्यः प्राप्नोति विशेषाभावादिति। अनयोरुत्तरम् ॥

अत्रैव विकल्पोऽमूर्तत्वं यथा नित्यत्वसाधकं न भवति तथा सर्वमपि साधर्म्यं वैधर्म्यं च साध्यसाधकं न भवतीत्युच्यते किंवा कृतकत्ववत्सर्वमपि साधर्म्यं वैधर्म्यं च साधकं स्यादिति। आद्ये पक्षे जातेरनुत्थानं तस्या अपि साधर्म्याद्वैधर्म्याद्वा समुत्थानात्। द्वितीये पक्षे परिहारमाह।

अविनाभाविनः साधर्म्यस्य वैधर्म्यस्य च हेतुत्वाभ्युपगमादप्रसंगो धूमादिवदिति ॥

यथा अग्निमत्साधर्म्यादनग्निमद्वैधर्म्याद्वाविनाभूताद्धूमादेर्वाऽग्निमत्त्व सिध्यति न पुनरग्निमत्साधर्म्यमात्रादनग्निमद्वैधर्म्याद्वा केवलात्सिध्यति तथा चेत्यर्थ । अविनाभाविन इत्यनेन विशेषाभावोऽसिद्ध इति सूचयति ।

साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमा ( गौ सू ५ १ ४ ) इति ॥

साध्य पक्षो विवक्षित । साध्यदृष्टान्तयोर्धर्मविकल्पादुत्कर्षापकर्षविकल्पसमा इत्युभयसाध्यत्वाच्च साध्यसम इति सबध । उत्कर्षापकर्षविकल्पशब्देषु भावे घञ्, साध्यशब्देषु भावे कृत्य । तदयमर्थ पक्षदृष्टान्तयोर्धर्मस्य विकल्पाद्वैचित्र्याद्यदोत्कर्षं प्रसञ्जयति तदोत्कर्षसम , यदा चापकर्षं तदापकर्षसमस्तथा साध्यदृष्टान्तयोर्धर्मस्य मूर्तत्वामूर्तत्वादेर्विकल्पनाच्चित्रत्वानित्यत्वविकल्प यदा प्रसञ्जयति तदा विकल्पसम , यदा च साध्यदृष्टान्तयोर्धर्मविकल्पादुभयस्य साध्यत्वमपि प्रसज्यत इत्यभिधाय ततो दृष्टान्तस्य साध्यत्वे को हेतु को वा दृष्टान्त इति प्रसञ्जयति तदा साध्यसम । उभयसाध्यत्वाच्चेति चकारेण धर्मविकल्प समुच्चीयते हेतुहेतुमद्भावेन च सबध । सूत्र विवृणोति ।

साध्ये दृष्टान्तादनिष्टधर्मप्रसग उत्कर्षसम । इष्टधर्मनिवृत्तिरपकर्षसम इति ॥

दृष्टान्तात्घटादा(?)साध्ये शब्दादौ अनिष्टस्याविद्यमानस्य धर्मस्य सावयवत्वादे प्रसग परेणापाद्यमान उत्कर्षसम । इष्टधर्मनिवृत्तिरित्यापाद्यमानेति शेष । अनयो स्वरूपमाह ।

यदि कृतकत्वादनित्य शब्दस्तदा घटवदेव सावयव स्यात् । अथ नैवमनित्योऽपि तर्हि न स्यादविशेषात् । अश्रावणश्च घटो दृष्ट शब्दोऽपि श्रावणो न स्यादविशेषादिति । शब्दो यदि कृतकत्वानुमानेनानित्यो वर्ण्यते तदा घटोऽपि कृतकत्वानुमानेनानित्यो वर्ण्य स्यात् ।

---

१ क Omits वर्ण्यावर्ण्य

१ क Omits यदि वर्ण्यावर्ण्यसमौ

अथानवस्थाभयाद् घटस्तेनैवानुमानेनानित्यो वर्ण्यते ततः शब्दोऽप्यवर्ण्यः स्यादविशेषादिति वर्ण्यावर्ण्यसमौ ॥

स्पष्टम् ।

अथ विकल्पसमः कृतकत्वाविशेषे यथा मूर्तत्वामूर्तत्वादिधर्मविकल्पस्तथा नित्यत्वानित्यत्वविकल्पोऽपि स्यादविशेषादिति ॥

साध्यदृष्टान्तयोरिति वाक्यशेषः ।

अथ साध्यसमो यदि कृतकत्वादुभयोरनित्यत्वं तर्हि साध्यत्वमप्युभयोः स्यात् । न वा कस्यचिदविशेषादिति ॥

ततश्च साध्यत्वे को हेतुर्दृष्टान्तस्य को वा दृष्टान्त इति प्रसङ्गः साध्यसम इति भावः ।

एतेषामुत्तरं किंचित्साधर्म्यादुपसंहारे सिद्धे वैधर्म्यादप्रतिषेधः ( गौ. सू. ५-१-९ ) ॥

किंचित्साधर्म्यादीषत्साधर्म्यादुपसंह्रियते यस्मिन् स उपसंहारो दृष्टान्तस्तस्य सिद्धेर्वैधर्म्यात्सर्वथा साधर्म्यादापाद्यमानादप्रतिषेधः साधर्म्यस्येति शेषः । अथवा किंचित्साधर्म्यादविनाभूतकृतकत्वादिलक्षणादुपसंह्रियत इत्युपसंहार· साध्यस्तस्य सिद्धेर्वैधर्म्यादविनाभावशून्यादप्रतिषेधः साध्यस्य । सूत्रार्थं संक्षेपेणाह ।

किंचित्साधर्म्याद्धूमवत्त्वादिलक्षणात्साध्यदृष्टान्तयोर्धर्मविकल्पेऽपि व्यवस्था दृष्टा । तदपलापे लोकादिविरोध· सर्वानुमानाप्रामाण्यप्रसंगश्चेति ॥

व्यवस्था वह्निमत्त्वस्यैव सिद्धिर्दृष्टा न पुनर्यस्य कस्यापि दृष्टान्तधर्मस्य सिद्धिः। नापि तदसिद्धौ वह्निमत्त्वस्याप्यसिद्धिः ।

---

१ ट. omits अथानवस्थाभयात्

प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ (गौ. सू. ५-१-७) इति ॥

साध्य प्राप्य शब्दादिकार्य च तद्विषयं ज्ञान। हेतोरित्यस्यानन्तर साधकत्वमसीकृतमित्युपसहारः। विकल्पस्त्वय जात्युत्थानिदाननिरूपणार्थं प्राप्त्याविशिष्टत्वादप्राप्त्यासाधकश्चेति। अत्र हेतुरसाधक इति प्रतिषेधोऽध्याहार्यः। सूत्रार्थमाह।

यद्यय हेतु. प्राप्य साध्यं साधयेदुभयोः प्राप्त्यविशिष्टत्वादङ्गुल्योरिव किं कस्य साधनं साध्यं चेति ॥

प्राप्तिः सयोगरूपा तया अविशिष्टत्व साधारणत्व तस्मात्।

अप्राप्य साधको नास्ति काष्ठाग्निवदिति ॥

नहि काष्ठमप्राप्य वह्निर्दहति प्रकाशयति वेत्यर्थः। परिहरति।

घटादिनिष्पत्तिदर्शनात्पीडने चाभिचारादप्रतिषेधः (गौ. सू. ५-१-८) इति ॥

निष्पत्तिरुत्पत्तिर्दर्शनेरिति च पीडन इति निमित्तसप्तमी पीडनार्थमभिचारदर्शनात्। प्राप्त्याविशेषेऽपि कुलालादिना मृत्पिंड एव घटीक्रियमाणः प्रदीपादिना च प्रकाश्यमानो दृश्यते न पुनर्विपर्ययस्तथानापीत्यर्थः। तथाऽप्राप्त्यविशेषेऽप्यभिचारकर्म पीडन शत्रोः कुर्वद्दृश्यते न विपर्ययस्तयोभयथापि हेतुत्वोपपत्तेरयुक्तो निषेधः। सूत्रस्य तात्पर्यार्थमाह।

प्राप्त्यप्राप्त्यविशेषेऽपि प्रतिनियतार्थवृत्तय एवैते साध्यसाधनत्वादयो धर्मास्ते निराकर्तुमशक्याः सर्वप्रमाणविरोधादिति ॥

किंचाय प्रसङ्गोऽपि हेतु प्राप्तः प्रतिषेधत्यप्राप्तो वेत्यादिदोषः समानस्तत स्तेनैव स्वस्य दुष्टत्वे हेतुरदुष्ट एव। जात्युत्तरान्तरमाह।

प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः (गौ. सू. ५-१-१२) ॥

---

१. ग. घ. read प्राप्त्याविशिष्टत्वाद्।

२. ग. घ. ङ. read अनयोरुत्तर before घटादि।

सोदाहरणमस्यार्थमाह ।

अनित्यः शब्दः कृतकत्वादित्युक्ते प्रागुत्पत्तेरनित्यत्वे कारणं नास्तीति नित्यः प्रसक्तस्तस्योत्पत्तिरनुपपन्नेति ॥

अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः । परिहरति ।

तथाभावादुत्पन्नस्य कारणोपपत्तेरप्रतिषेधः ॥

उत्पन्नस्य शब्दस्य तथाभावादुत्पत्तिसद्भावात्कारणोपपत्तेरनित्यत्वसाधकहेतूपपत्तेरप्रतिषेधः । अन्यथा प्रतिज्ञादिवचनात्प्रागदुष्टो हेतुरदुष्टे च दूषणानुपपत्तिरिति जातिप्रयोगव्याघातात् । तात्पर्यार्थमाह–

अनुत्पन्नः शब्द एव नास्तीति कस्य नित्यत्वादि धर्मोऽभिधीयते ॥

आदिशब्दादनित्यपरिग्रहः ।

जात्यन्तरमाह ।

त्रैकाल्यासिद्धेर्हेतोरहेतुसमः (गौ. सू. ५-१ १८) ॥

त्रैकाल्येऽसिद्धिस्त्रैकाल्यासिद्धिरिति विग्रहः । एतदेव विवृणोति ।

यदि पूर्वं साधनमसति साध्ये कस्य साधनम् । अथ पश्चादविद्यमानं कथं साधनम् । अथ युगपत्तथापि किं कस्य साध्यं साधनं वेति द्वयोस्तुल्यकालत्वात् ॥

अविद्यमानमिति साध्यकाल इति शेषः । हेतोरहेतुत्वापादनाय प्रतिषेधो हेतुसम इति । परिहरति ।

न हेतुतः साध्यसिद्धेः ॥

साध्यस्य कार्यस्य शब्दस्य च हेतुत एव सिद्धेस्तत्त्वेऽन्येऽन्यश्च लोके दर्शनं न युक्तः प्रतिषेधः । यदि पुनरस्य हेतुतः साध्यसिद्धिर्नाङ्गीक्रियते तदा प्रवृत्तिनिवृत्तिभ्यामपि कस्यचिद्धर्मस्यासाधनात् तयोर्वैयर्थ्यप्रसङ्गः । एतदेवाह ।

प्रवृत्त्यादिविरोध इति सूत्रार्थः ॥

---

१ ग. घ. ङ. कार्यत्वात् ।

२ ङ. omits अथ पश्चात्......साधनम् ।

इतोऽपि हेतो प्रतिषेधो नापपद्यत इत्याह ।

प्रतिषेधानुपपत्तेश्च त्रैकाल्यासिद्धे ॥

यो य परेण प्रतिषेध क्रियते स किं प्रतिषेध्यात्पूर्वमुतपश्चादथ युगपत् ? यदि पूर्वं तदाऽसति प्रतिषेध्ये कस्याय प्रतिषेध स्यात् । अथ पश्चादसति प्रतिषेधे कथ प्रतिषेध्य । युगपच्चत् सव्येतरगोविषाणयोरिव कि कस्य प्रतिषेधक प्रतिषेध्य वा स्यात् । एककालत्वाविशेषात् । न चैवमस्यापि प्रतिषेधस्य त्रैकाल्यासिद्धेरिति दूषणे सत्यनवस्थाया कस्यापि सिद्धिर्नस्यादित्याशक्याह ।

स्ववचनेनैव प्रतिषेधासिद्धौ हेतुसिद्धिरिति सूत्रार्थ ॥

स्वरूपनाशकत्वाच्च दोष एव न भवतीति भाव । एतेन सर्वोऽप्यय साधर्म्यवैधर्म्यादिजातिप्रयोग स्वरूपमपि न प्राप्नोतीति ताच्छिष्यैरूहनीयमिति सूचयति । जात्यन्तरमाह ।

एकधर्मोपपत्तेरविशेषे सर्वाऽविशेषप्रसङ्गात्सद्भावोपपत्तेरविशेषसम (गौ सू ५ १ २३) ॥

एतदेव विवृणोति ।

यदि घटशब्दयोरेकस्य कार्यत्वस्योपपत्तेरनित्यत्वेनाऽविशेष इष्यते सर्वभावाना तर्हि सद्भावोपपत्तेरविशेष प्रसज्यत इति ॥

परिहरति ।

तत्रेदमुच्यते । सर्वथाऽविशेष प्रत्यक्षविरोध , अनित्यत्वेनाऽविशेषे त्वनुमानागमविरोध । केनचिदविशेषे प्रमेयत्वादिना सिद्धसाधनम् ॥

सर्वथाविशेष प्रतिषेधानुपपत्तेश्च प्रतिषेध्यप्रतिषेधयोर्भेदासिद्धिरित्यूह्यम् । आत्मादिर्नित्योऽनादिवस्तुभूतत्वाद्यन्नित्य न भवति तदनादि वस्त्वपि न भवति । यथा घटादीत्यनुमानम् , " अविनाशी वा अरेऽयमात्मा " ( बृहदा० उ० ४।५।१४) इत्यागमस्ताभ्या विरोध ।

निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसम (गौ सू ५ १-२७) ॥

हेतुरयुक्त इति प्रतिषेध इति शेष । सूत्र विवृणोति ।

पृथिव्यादिषु कार्यत्वसिद्धये निर्दिष्टस्य सावयवत्वस्याभावेऽपि बुद्धयादौ कार्यत्वमुपलभ्यम् ॥

इत्यप्रयोजकोऽय हेतुरिति । उपलब्ध्या प्रतिषेध उपलब्धिसम इति । परिहरति ।

सपक्षैकदेशस्यापि धूमादेर्गमकत्वदर्शनादप्रतिषेध ॥

सपक्षैकदेशे वर्तमानो हेतुरत्र सपक्षैकदेश इत्युक्त , उपचारात्, मञ्चशब्दन पुरुषवत्। सपक्षस्यैकदेशो यस्यासौ सपक्षैकदेश इति भिन्नाधिकरणो वा बहुव्रीहि । अथ सपक्षव्यापके हेत्वतरे सत्यव्यापकस्याप्रयोजकत्व नाव्यापक मात्रस्य धूमाद । इहाभूत्वाभावित्वस्य सपक्षस्य व्यापकत्वमिति तदप्य युक्तम् । द्रव्यत्वसाधने सपक्षव्यापकस्य गुणवत्वस्य समवायिकारणत्वस्य वा सद्भावेऽपि वायो क्रियावत्वादपि द्रव्यत्वासिद्ध । नापि कार्यत्वेऽभूत्वाभावि त्वमिति वाच्य । तयो पर्यायत्वादिति । इदानीमाशङ्कापूर्वक सूत्रोक्त परिहारमाह ।

कथ तर्हि बु द्यादौ कार्यत्वासिद्धिरित्यत आह कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेध ( गौ सू ५ १ २८ ) ॥

तद्व्याचष्टे ।

प्रमाणान्तरादपि कार्यत्वसिद्धिरित्यर्थ ॥

यथा धूमाभावेऽयोगोलकादौ प्रमाणान्तरादग्निसिद्धिस्तथेत्यथ । प्रमाणान्तरमेव दर्शयति ।

प्रमाण चानुपलब्धिकारणेष्वसत्सु प्रागूर्ध्व चानुपलम्भादिति ॥

तथाहि बुद्धयादि कार्यमनुपलब्धिकारणेष्वसत्सु प्रागूर्ध्वं चाऽनुपलभ्यमान त्वात्, घटादिवत् । येष्वावरणादिषु सत्सु बुद्धिघटादयो विद्यमाना अपि न गृह्यन्ते तान्यनुपलब्धिकारणानीत्युच्यन्ते । अस्मिन्ननुमाने जात्युत्तर सौत्र दर्शयति ।

---

१. ग ड add घटवत् after अनुपलम्भात् ।

तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसम (गौ सू ५ १ २९) इति ॥

तद्विपरीतोपपत्तेरित्यस्मादसिद्धो हेतुरिति प्रतिपक्षाऽध्याहाय । सूत्रमाचष्टे।

तस्य बुद्ध्यादिकार्यस्यानुपलब्धेरनुपलम्भादभावसिद्धावनुपलब्धिविपरीतोपलब्ध्युपपत्तेः प्रागूर्ध्वमपि बुद्ध्यादेः सद्भाव सेत्स्यतीति भाव ॥

अनुपलब्ध्या प्रत्यवस्थानमनुपलब्धिसम, उपलभ्यमानत्व उपलब्धिरेव स्यान्नानुपलब्धिरिति भाव । परस्यात्तरमाह ।

अनुपलभात्मकत्वादनुपलब्धेरहेतु ॥

अनुपलब्धेरनुपलभकत्वादनुपलम्भरूपेण प्रतीयमानत्वादहेतु । बुद्ध्यादनुपलब्धेनाभावसाधकानुपलब्धिरित्यर्थ । अमुमेवार्थमाह ।

नास्तीति ज्ञानमनुपलब्धि । सा च तत्स्वभावतया प्रत्यात्मवेद्या । अतस्तदनुपलब्धिरसिद्धेत्यभिप्राय ॥

यदाऽपि उपलभ्यमानाऽनुपलब्धिस्तदाऽपि तस्या प्रत्यात्मवेद्यत्वादनुपलब्धिरिष्टा । तथाहि शास्त्रज्ञानमपि पूर्वं नास्तीदानीं चास्ति शास्त्रज्ञानमपि नोपलभ्यत इत्यनुपलम्भरूपेण जायते । एतेनोपलभ्यमानत्वादुपलब्धि स्यादित्येतत्प्रत्युक्तम् । विधिमुखेनोपलब्धिर्यथा प्रतीयते तथाऽनुपलब्ध प्रतीत्यभावात् । किंच परवचनस्य स्वरूपाप्रतिषेधात्मकत्वे हेतोरप्रतिपक्ष स्यात् स्वरूपप्रतिषेधकत्वे स्वयमेव स्यादित्यलम् ।

नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसम । (गौ सू ५ १ ३५) इति ॥

अस्यार्थमाह ।

अनित्यत्वस्य धर्मस्य नित्य सर्वदा सद्भावे धर्मिणोऽपि शब्दस्य सर्वदा सद्भाव । अथानित्यत्व सर्वदा नास्ति तथाप्यनित्यत्वाभावान्नित्य शब्द इति ॥

धर्मिणोऽपि शब्दस्य सर्वदा सद्भाव इति धर्मिणमन्तरेण धर्मस्यावस्था

नाभावादिति भावः। नित्यत्वस्य प्रसगो नित्यसमः। परिहरति।

अनित्यत्वस्य सर्वदाऽभ्युपगमे नित्यत्वविरोधः। अनभ्युपगमे चासिद्धो हेतुः ॥

नित्य सर्वदा नित्यत्वस्य भावादित्ययमसिद्ध इत्यर्थः। यत्तु धर्मस्यावस्थानाद्धर्मिणोऽप्यवस्थानप्रसग इति दूषण तत्राऽऽह।

प्रध्वंसश्चानित्यत्वं न च तस्मिन्सति शब्दसद्भाव इति ॥

भावात्मको हि धर्मो निराश्रयो न भवति न त्वभावात्मक इति भावः। ननु सूत्रकारेणोक्तानामन्यासा विद्यमानानामिह कस्मादनभिधानमित्याशक्याऽऽह।

एतेनान्यत्वस्याऽऽत्मनोऽनन्यत्वादन्यत्वं नास्तीत्यसदुत्तराणि प्रत्युक्तानि ॥

एतेन कतिपयजातीना स्वरूपदर्शन परिहाराभिधानेन प्रत्युक्तानि तत्समानन्यायतयेति भावः। यदिदमन्यदुच्यते तत्स्वरूपादन्यदुतानन्यत्, यदि स्वरूपादन्यत्तदात्मशानादसदेव स्यात्। अथानन्यत्तदाप्यनन्यत्वादेवान्य न भवतीत्यन्यताया अभाव इतीयमनन्यसमा जातिः। कथमिय निराकृतेत्यत आह।

निमित्तान्तरात्संज्ञान्तरे योज्यमानेऽप्यर्थे तथाभावस्य निराकर्तुमशक्यत्वात् ॥

निमित्तान्तरात्स्वरूपापेक्षया भेदाभावलक्षणात्संज्ञान्तरेऽनन्यशब्दे योज्यमाने परेणाप्यर्थे तथाभावस्य वस्त्वन्तरापेक्षयान्यशब्दवाच्यत्वस्य निराकर्तुमशक्यत्वात्। यदि वा घटादौ निमित्तान्तरात्पदार्थान्तरापेक्षया भेदलक्षणात्संज्ञान्तरेऽन्यशब्दे योज्यमानेऽर्थे तथाभावस्य स्वरूपापेक्षया भेदशून्यत्वस्य निराकर्तुमशक्यत्वात्पुलादिवदित्यर्थः।

ननु तथापि वचनव्यक्त्या सगृह्य जात्युत्तराणि सर्वाणि कस्मान्नोक्तानीत्याह।

---

१. घ adds पृथक् before नास्ति।

आनन्त्यान्न सर्वाणि जात्युत्तराण्युदाहर्तुं शक्यन्ते सूत्राणाम प्युदाहरणार्थत्वात् ॥

सूत्राणामुदाहरणार्थत्व च चतुर्विशतिव्यतिरिक्तजात्यन्तरेणाप्यनन्यसमा दिना स्थानान्तरे सूत्रकारेण प्रदर्शनस्थानकरणाद्विज्ञायते । उपसहरति ।

उक्ता जातिभेदाः । अथेदानीं निग्रहस्थानान्युच्यन्ते । तान्यपि विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पानन्त्यादसख्यातानीत्यत सक्षेपेण व्युत्पा द्यन्ते ॥

सूत्रोक्तानि द्वाविंशतिनिग्रहस्थानानीति लक्षणोदाहरणाभ्या प्रदर्श्यन्त इत्य र्थ । तथा च सूत्रम् ।

प्रतिज्ञाहानिः प्रतिज्ञान्तर, प्रतिज्ञाविरोध, प्रतिज्ञासन्यास, हेत्वन्तर, अर्थान्तर, निरर्थक, अविज्ञातार्थ, अपार्थक, अप्राप्तकाल, न्यून अधिक, पुनरुक्त, अननुभाषण, अज्ञान, अप्रतिभा, विक्षेप मतानुज्ञा, पर्यनुयोज्योपेक्षण निरनुयोज्यानु योग, अपसिद्धान्त, हेत्वाभासाश्च निग्रहस्थानानि । (गौ सू १२१) ॥

सूत्रे वाक्यात्मकानामपि विप्रतिपत्त्यप्रतिपत्तिसूचकत्वेन पराजयनिमि त्तत्वान्निग्रहस्थानमियुक्तम् । असमासकरणमन्यो यनिरपेक्षाणामेषा स्वकार्यकर णसामर्थ्यप्रकटनार्थम् । सूत्रक्रमेण लक्षणमाह ।

तत्र साध्ये प्रतिदृष्टान्तधर्मानुज्ञा प्रतिज्ञाहानि ॥

अस्या उदाहरणमाह ।

यदि कृतकत्वादनित्य शब्द इष्यते तर्हि आकाशवदमूर्तत्वा न्नित्य किं नेष्यते । एव प्रतिवादिनोक्ते वाद्याह भवतु किं नो बाध्यते ।

---

१ ग नोध्यत इ गाधत ।

तस्य नित्यत्वाभ्युपगमेनानित्यत्वप्रतिज्ञा हीयतेऽत्त प्रतिज्ञाहानिर्नाम निग्रहस्थानं भवतीति ॥

उपलक्षणमेतत् । हेतुहान्यादीनामप्यनेन सग्रह' । तथाह्यनित्य शब्दः प्रमेयत्वादित्यस्य हेतोरनैकान्तिकत्वेन प्रतिषेधे कृते सत्यमस्तु तर्हि कृतकत्वादिति ब्रुवतो हेतुहानि । अनित्ये वाङ्मनसे कार्यत्वादित्यस्य भागासिद्ध्या प्रतिषेधे भाग एव तर्हि पक्षीकृत इति वदत पक्षहानि । एव प्रतिज्ञाविशेषहान्यादयोऽस्माभिर्न्यायभूषणेऽभिहिता इति तत्रैव ज्ञातव्या ।

प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देश प्रतिज्ञान्तरम् ( गौ. सू. ५ २-३ ) ॥

लक्षणसूत्रमु दाहरणप्रदर्शनमुखेन व्याचष्टे ।

सर्वमनित्य सत्त्वादित्यस्य दृष्टान्ताभावेन प्रतिज्ञातार्थस्य प्रतिषेधे धर्मो विवादास्पदीभूतत्वादिलक्षणस्तस्य विकल्प , प्रतिज्ञातार्थस्य विशेषणत्वेन योजन । तदर्थ इति प्रतिषेधनिवृत्त्यर्थो यथा मशकार्थो धूम इति निर्देश । विवादास्पदीभूत सर्वमनित्यमित्येतत्प्रतिज्ञान्तर निग्रहस्थान हेत्वन्तरवदिति ॥

दृष्टान्ताभावेनासाधारणत्वेनेत्यर्थं । प्रतिषेधनिवृत्त्यर्थ इत्येतेन तच्छब्दः प्रतिषेधपरामर्शी, अर्थश्च निवृत्तिगर्भितप्रयोजनवाचीति सूचितम् । ननु निर्विशेषप्रतिज्ञाया प्रहाणात्प्रतिज्ञाहानितोऽस्य को विशेष । न स्वरूपमात्रापरित्यागात्तस्यैव विशेषणान्तर समर्थयितु प्रवृत्तत्वात् ।

प्रतिज्ञाहेत्वोर्विरोध प्रतिज्ञाविरोध । यथा गुणव्यतिरिक्त द्रव्य, भेदेनानुपलभ्भादिति ॥

नच वक्तव्य विरुद्धहेत्वाभास एवायमतो न पृथग्वाच्य इति । व्याप्ति

---

१ ग. ड add घटवत् after अनुपलम्भात् ।

ग्रहणवशाद्विरुद्धहेत्वाभासे विरोधोपगमः, इह हेतुप्रतिज्ञावचनश्रवणमात्रे देवेतीयता भेदेन पृथगभिधानम्।

पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः (गौ सू. ५-२-५) पक्षप्रतिषेधेऽनुष्णोऽयमग्निरित्यस्य प्रत्यक्षविरोधित्वेन प्रतिषेधे वादयाह संपश्यध्वं संपश्यध्वमहो मध्यस्थाः साक्षिणो नाहमग्निमनुष्णं ब्रवीमी-त्यनुक्तोपालंभोऽयमित्येतत्प्रतिज्ञासंन्यासलक्षणं निग्रहस्थानमिति ॥

अत्र प्रतिज्ञासन्यासस्योपलक्षणत्वाद्धेत्वादिसन्यासा अपि निग्रहहेतवो वेदितव्याः। यथाऽनित्यः शब्दः प्रमेयत्वादित्यस्यानैकान्तिकत्वेन प्रतिषेधे कृते नाहमनित्यत्वे प्रमेयत्वं हेतुं ब्रवीमीति ब्रुवाणस्य हेतुसन्यास इत्यादिः। समो गम्यृच्छिप्रच्छिस्वरतीत्यादिसूत्र (पा. १-३-२९) इत्येश्वेति वक्तव्यमित्यनेन संपश्यध्वमित्यात्मनेपदम्।

अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् (गौ. सू. ५-२-६) ॥

विशिष्यते येनासौ विशेषो विशेषणं न विद्यते यस्मिन्नसावविशेषः। स चासावुक्तश्चेत्यविशेषोक्तः। तस्मिन् हेतुशब्दश्च परार्थानुमानवाक्यगत साधनभागोपलक्षक। वचनशब्दस्याध्याहारः। तेन चाविशिष्टसाधनमभिधाय तद्दूषणे च परोद्भाविते पश्चाद्विशिष्टमभिदधतो वचनं हेत्वन्तरमित्यर्थः। अस्योदाहरणमाह।

यथा नित्या वेदा अस्मर्यमाणकर्तृकत्वादित्यस्य जीर्णकूपाऽऽरा-मादिभिरनैकान्तिकत्वेन प्रतिषेधे संप्रदायाविच्छेदे सतीति विशेषण-मिच्छतो हेत्वतरमिति निग्रहस्थानं ॥

सम्भवतीति दोषः। कथमित्याशङ्क्याह।

पूर्वस्यासाधकस्योपादानात् ॥

ननु प्रतिज्ञाहान्या हेतुहान्यादीनामुपलक्षणवत्प्रतिज्ञान्तरेण हेत्वन्तर स्याप्युपलक्षणं भविष्यतीति किमस्य पृथगुपादानेनान्यथोदाहरणान्तरादीना

मपि पृथगुपादानप्रसग'। यथा गुणः शब्दः सामान्यवत्तास्पर्शवत्त्वे सत्यस्म दादिबाह्येन्द्रियग्राह्यत्वाद्रूपादिवदित्यत्र रूपमात्रस्यास्मदादिप्रत्यक्षत्वाभावा-त्साधनविकले दृष्टान्ते दूषिते घटरूपादिवदिति वदत उदाहरणान्तर तथोपनयान्तर निगमनान्तरमप्युदाहरणीयम्। सत्यम्। तथापि परार्थानुमान-वाक्यस्य साध्यसाधनरूपतया तद्भेदाविवक्षया पृथगभिधानम्। तेनात्र प्रतिज्ञान्तर निगमनान्तर च प्रतिज्ञान्तरशब्देन गृह्यते। हेत्वन्तरमुदाहरणा न्तरमुपनयान्तर च हेत्वन्तरग्रहणेन गृह्यत इति।

प्रकृतादर्थादप्रतिसंबद्धार्थमर्थान्तरम् (गौ. सू. ५ २ ७)॥

अत्रान्यदित्यध्याहार्य, अर्थान्तरमिति लक्ष्यपदमेव वा लक्षणेऽप्यावृत्त्या संबन्धनीयम्। तेन प्रकृतात्प्रस्तुतादर्थात्साध्यसाधनात्तद्दूषणाद्वा यदर्थान्तर प्रकृतेनासम्बद्धार्थमनुपयोगि तदर्थान्तरमित्यर्थ। एतदेव सोदाहरणमाह।

यथानित्यः शब्दोऽस्पर्शवत्त्वादिति हेतो'। हेतुश्च हिनोतेर्धातोस्तु-न्प्रत्यये कृते सति कृदन्त पदमित्यादि प्रसक्त्यानुप्रसक्त्या प्रकृतार्था नुपयोगिशास्त्रान्तरमुपदिशतोऽर्थान्तरं निग्रहस्थानमिति॥

अस्पर्शवत्त्वादिति हेतुमज्ञानात्प्रयुज्यानन्तरमेव स्वयमनैकान्तिकत्वमेव जानानस्तदाच्छदानार्थमेव प्रवर्त। इति भाव'।

वर्णक्रमनिर्देशवन्निरर्थकम् (गौ सू. ५ २-८) यथा नित्य शब्दः कचटतपाना गजडदबवत्वात् घझढधभवत्॥

वर्णक्रमनिर्देशो वर्णाना पाठक्रम', अआइई इत्यादिः, स इव तद्वत्। सादृश्य चात्रार्थशून्यत्वम्। यत्र पदार्थोऽपि नास्ति तन्निरर्थकम्। वर्णक्रम निर्देश एवास्ति न पुनरर्थो यत्र तद्वर्णक्रमनिर्देशवदिति मत्वर्थीयो वा।

परिषत्प्रतिवादिभ्या त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् (गौ.सू.

---

१ ग. adds after पद–पद च नामाख्यातोपसर्गनिपातभेदाच्चतु-र्विधमित्यादि।

५-२-९)॥ यद्वाक्यं वादिना त्रिरभिहितमप्यप्रतीतप्रयोगाऽतिद्रुतोच्चारणादिना निमित्तेन परिषत्प्रतिवादिभ्यां न ज्ञायते तदज्ञानसंवरणायोक्तमविज्ञातार्थं नाम निग्रहस्थानमिति ॥

न ज्ञायते इति विद्यमानार्थमेवार्थतो न ज्ञायत इत्यर्थः । न पुनः स्वरूपत इत्यर्थः ।

पौर्वापर्यायोगादप्रतिसंबद्धार्थमपार्थकम् ( (गौ. सू.५-२-१० )।

पूर्वं विशेषणमपरं विशेष्यं तयोर्भावः पौर्वापर्यं विशेषणविशेष्यभावस्तेनायोगोऽसंबन्धस्तस्मात्कारणादप्रतिसंबद्धोऽनन्वितोऽर्थो यस्य तदसंबद्धार्थम् । तत्रवाक्ययोरनन्वितत्वे उदाहरणमाह ।

यथा दश दाडिमानि षडपूपा इति ॥

पदयोरनन्वितत्वे निदर्शनमाह ।

कुण्डमजाजिनमित्यादीनीति ॥

अवयवविपर्यासवचनमप्राप्तकालम् ( गौ. सू. ५-२-११) ॥

विपर्यासेन व्यत्ययेन वचनं विपर्यासवचनम् । अवयवानां विपर्यासवचनमवयवविपर्यासवचनम् । सूत्रस्यार्थमाह।

प्रतिज्ञादीनामर्थवशात्क्रमस्तेषां विपर्ययेणाभिधानं निग्रहस्थानमिति।

स्पष्टम् । एतच्च नियमकथायां निग्रहस्थानमकथायां तु न विरोधः ।

हीनमन्यतमेनाप्यवयवेन न्यूनम् ( गौ. सू.५ २-१२ ) ॥ साधनाभावे साध्यासिद्धेरिति ॥

उक्तमेतत् ।

हेतूदाहरणादिकमाधिकम् ( गौ. सू. ५ २-१३) ॥

हेतूदाहरणग्रहणं सर्वस्याधिकस्योपलक्षणम् । अस्य निग्रहस्थानत्वे कारणमा।

---

१ ग. अनितभेन.

एकेन कृतार्थत्वादितरानर्थक्यमिति ॥

एक एव हेतुर्दृष्टान्तो वा मयोच्यत इति नियमपूर्विकायामेतद्दूषणम् । न सर्वत्र । असंभववादिना तु सर्वदा । एतच्च न्यूनाधिकलक्षणद्वयमपि स्वस्वमताभ्युपगतावयवापेक्षया न्यूनत्वे चाधिकत्वे च दूषणं विज्ञेयम् ।

शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् (गौ.सू.५-२-१४)॥

एतद्व्याचष्टे।

सार्थकं पुनरभिधानमनुवादः । तद्व्यतिरेकेण पुनरभिधानं पुनरुक्तम् । नित्यः शब्दो नित्यः शब्द इति शब्दपुनरुक्तम् । नित्यो[१] ऽविनाशी शब्द इत्यर्थपुनरुक्तमिति ॥

सार्थकं पुनरभिधानं यथा गौर्गौः कामदुघेत्यादि । पुनरुक्तान्तरमाह ।

अर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तम् (गौ.सू ५-२-१६)॥
यथा साधर्म्योदाहरणेऽभिहिते वैधर्म्योदाहरणाभिधानम् ॥

व्याप्तिख्यापनार्थं ह्युदाहरणमुच्यते तच्चैकेनाप्युदाहरणेन कृतमिति व्यर्थमुभयाभिधानम् । यथा यद्यत्कृतकं तत्तदनित्यं यथा घटादीत्यभिधाय यदनित्यं न भवति तत्कृतकमपि न भवति यथा गगनम् इति । अन्वयव्यतिरेकज्ञापनार्थमुभयाभिधानमिति चेन्नैवम् । तज्ज्ञापने प्रयोजनाभावाद् व्याप्तिप्रतीत्यैवानुमानसिद्धेः । चोदयति ।

कथं तन्निग्रहस्थानमिति ॥

तादीतपुनरुक्तमात्रम् ।

कथावसानाविरोधित्वादेकेन कृतार्थत्वादितराऽऽनर्थक्यादिति ॥

उक्तस्यापि पुनरभिधानेऽन्यतरथा वैयर्थ्यं चेत्यर्थः । एतदपि नियमकथायामेव निग्रहस्थानम्, अनियमकथायां तु साधर्म्यवादिनोरपेक्षायां सत्यां

---

१ प. ट. omit नित्यो ऽविनाशी......पुनरुक्तमिति ।

स्पष्टार्थं पुनरभिधानेऽपि विरोधाभावात् त्रिरभिधाननियमाच्च नातिप्रसङ्गः। तथाप्यधिकाद्भेद न भिद्यत इति चेत् सत्यम्। पुनरुक्तमप्यधिकं दर्शित मेव अधिकात्तु क्रियाभेदेन पुनरुक्तं पृथगुक्तं शिष्यव्युत्पादनार्थमित्यदोषः।

विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् (गौ. सू. ५-२-१७) प्रतिवादिनो निग्रहस्थानम् ॥

उपलक्षणमेतत्, यत्प्रतिवादिदूषणस्याननुवादे वादिनोऽपि सद्भावात्। कथमेतन्निग्रहस्थानमित्याशङ्क्याह।

अप्रत्युच्चारयन्किमाश्रयः परपक्षप्रतिषेधं ब्रूयादिति ॥

क आश्रयो विषयो यस्यासौ किमाश्रयः। एतेन दूषणमात्रानुवादेऽप्यसमर्थ स्येतद्दूषणमिति सूचितं न पुनः सर्वानुवादः कर्तव्य इति। त्रिरभिहितस्येत्येत दपि परिषदस्युपगमस्योपलक्षणं यावत् प्राश्निका अन्यतरस्यासामर्थ्यं निश्चि न्वन्ति तावद्वक्तव्यमिति भावः।

अविज्ञातार्थं चाज्ञानम् (गौ. सू. ५-२-१८)॥

चकारेण पूर्वसूत्राद्विज्ञातस्य परिषदा त्रिरभिहितस्यापीत्येतदाकृष्यते, तदेवाह।

यद्वाक्यं त्रिरभिहितमपि परिषदाऽवगतार्थं प्रतिवादी प्रत्युच्चा- रयन्नपि नार्थतः सम्यगधिगच्छति तदज्ञानं नाम प्रतिवादिनो निग्रह- स्थानमिति ॥

अत्रापि प्रतिवादिग्रहणमुपलक्षणम्।

कथामभ्युपेत्य तूष्णीं भावोऽप्रतिभा वादिप्रतिवादिनो निग्रहस्थान- मिति ॥

अननुभाषणे तु न तूष्णीमास्ते किंत्वप्रत्युच्चारयन्नपि दूषणादिकमभि दधाति। अतो नानयोरभेदः।

कार्यव्यासंगात्कथाविच्छेदो विक्षेपः (गौ. सू. ५-२-२०)॥

अस्यार्थमाह।

कथामभ्युपगम्य सभ्येषु निलिनेषु ब्रवीत्यद्य मे महत्प्रयोजनमस्ति तस्मिन्नवसिते पश्चात्कथयिष्यामीति ॥

यदि पुनरिदानीमेव महत्प्रयोजनं सभ्या अभ्युपगच्छन्ति तदर्शिनः कथाविच्छेदो न पराजय इति । न नेदमर्थान्तरेऽन्तर्भवतीति वाच्यम् । हेतुप्रयोगान्तरं तदनुपयोगिवचनमर्थान्तरम्। अत्र हेतून्यासमपि पश्चात्कथयिष्यामीति वदतस्तोऽस्ति भेदः ।

स्वपक्षदोषाभ्युपगमात्परपक्षदोषप्रसंगो मतानुज्ञा (गौ सू.५-२-२१)॥

पक्षोऽत्र सिद्धान्तो विवक्षितः, न पुनः सिसाधयिषितधर्मविशिष्टधर्मिमात्रम्[1] । अभ्युपगमोऽपरिहरणम् । तेन स्वसिद्धान्ते परोक्तदूषणमपरिहृत्य परसिद्धान्ते दोषप्रसजनं मतानुज्ञेत्यर्थः । तदेवाह ।

यः स्वपक्षे मनागपि दोषं न परिहरति केवलं परपक्षे दोषं प्रसंजयति भवांश्चोर इत्युक्ते त्वमपि चोर इति तस्येदं निग्रहस्थानम्॥

कस्मादित्याऽऽशक्याह ।

स्वयं दोषाभ्युपगमात्परेणानभ्युपगमात् ॥

अप्रतिषिद्धमनुमतं भवतीति न्यायेनेति भावः ।

निग्रहं प्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् (गौ. सू.५-२-२२)॥

एतद्व्याचष्टे ।

पर्यनुयोज्यो नाम निग्रहोपपत्त्या चोदनीयस्तस्योपेक्षणं निग्रहं प्राप्तोऽसीत्यननुयोग इति ॥

एतच्च निग्रहस्थानं कतरस्यात्र पराजय इति पृष्टया परिषदा समुद्भावनीयम् । निग्रहं प्राप्तस्य स्वदोषोद्भावनानुपपत्तेः ।

---

[1] ग. घ. ङ. एतदुभाभ्यामनुक्तया परिषदा वक्तव्यम् ।

अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ( गौ. सू. ५ २-२२) ॥

अदोषे दोषोद्भावनमित्यर्थ । एतदेवोदाहरति ।

यथा सावयवत्वेन पृथिव्यादौ कार्यत्वसाधने परो ब्रूयादप्रयोजकोऽय हेत्वाभास इति तस्येद मिथ्याभियोगलक्षण निग्रहस्थानमिति ॥

द्रव्यत्व सति द्रव्याश्रितत्व सावयवत्व न चास्य कार्यत्वस्य साधनेऽसिद्धत्वाद्यन्यतमदूषणतास्ति । बुद्ध्यादौ सावयवत्वाभावे कार्यत्वोपलम्भाद्व्याप्त्यभावेनाप्रयाजकमिति चेन्न सपक्षैकदशवृत्तेर्धूमादेरप्यप्रयोजकत्वप्रसगात् अथ सपक्षव्यापके हेत्वन्तरे सत्यव्यापकस्य हेतोरप्रयोजकत्वेनाव्यापकमात्रस्य धूमादे । अत्र तु कादाचित्कत्व सकलकार्यव्यापक प्रयोजक सावयवत्वमिति चेन्न कार्यत्वकादाचित्कत्वयो पर्यायत्वात् ।अव्यापकस्याप्यसिद्धत्वादिदोषरहित येन प्रयोजकत्व केन वार्यत इत्यलम् ।

सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसगोऽपसिद्धान्त (गौ सू ५-२ २४)॥ यथा मिमासामभ्युपगम्य कश्चिदग्निहोत्र स्वर्गसाधनमित्याह ।कथपुनरग्निहोत्रक्रिया प्रध्वस्ता सती स्वर्गसाधिका भविष्यतीत्यनुयुक्तः प्राह अनया क्रिययाऽऽराधित परमेश्वर फल ददाति राजादिवदिति तस्येश्वरानभ्युपगमादपसिद्धातो निग्रहस्थानम् ॥

इति वाच्यमिति शेष । अन्ये त्वन्यथा सूत्रमाहु 'सिद्धान्तमुपेत्य कश्चिदर्थं प्रतिज्ञाय नियमात्तद्विरोधेन कथाप्रसग कथाकरणमपसिद्धात' इति त युक्तमित्याह ।

प्रतिज्ञातार्थविपर्ययस्तु प्रतिज्ञाहानिर्नापसिद्धात इति । हेत्वाभासाश्च यथोक्ता ( गौ सू ५ २ २५) ॥

यथा येन प्रकारेण हेत्वाभासा उक्तास्तेन प्रकारेण निग्रहस्थानानि न पुनः प्रमाणस्य प्रमेयत्ववल्लक्षणान्तरेण । हेत्वाभासलक्षणेनैव यथोक्तेन हेत्वाभासा उक्तास्तेन प्रकारेण निग्रहस्थानानि तदेवाऽऽह ।

हेत्वाभासलक्षणेनैव यथोक्तेन लक्षिता हेत्वाभासा निग्रहस्थानानी-त्यर्थः ॥

चकारो दृष्टान्ताभासानन्वयविपरीतान्वयादिसमुच्चये, तेषामपि निग्रहहेतुत्वात्। सूत्रोक्तानि द्वाविंशतिर्निग्रहस्थानानि न नियमार्थानि किंतूपलक्षणार्थानीति चाह।

एतेन दुर्वचनकपोलताडनवादित्रादीनां साधनानुपयोगित्वेन निग्रहस्थानत्वं वेदितव्यम्। नियमकथायां त्वपशब्दादीनामिति ॥

एतेनेति केषांचिल्लक्षणोदाहरणप्रपञ्चनेन। नियमकथायां तु संस्कृतेन मया वक्तव्यम् वर्मत्यागेन वा श्लोकबन्धेन वेत्येवंरूपायाम्।

इति न्यायसारे पदपंचिकायामनुमानपरिच्छेदो द्वितीयः ॥

## तृतीयः परिच्छेदः ।

अवसितमनुमानमागमस्येदानीं लक्षणमुच्यते ॥

अवसित निश्चितमनुमानमिति वृत्तानुकीर्तनेनागमस्यानुमानपूर्वकत्वात्तल्लक्षणानन्तरमेवास्य लक्षणावसर इति सूचयति । तथाहि समयग्रहणबलात् शब्दानामर्थबोधनसाधनत्वम् । समयग्रहण च प्रायेण वृद्धव्यवहारादनुमानरूपादेवेति ।

समयबलेन सम्यक्परोक्षानुभवसाधनमागम ॥

समय सकेत पुरुषकृतो न पुनरविनाभावपरत्वाभाविक, स्वाभाविकत्वे हि अविनाभाविधूमादिलिङ्गवन्नियततमेवार्थं बोधयेन्न तद्विपरीतम् । न हि धूमो दहनमिव तदभाव जलादिकमनुमापयति दहनादिशब्दास्तु पुरुषेण यत्र यत्र सकेत्यन्ते तत्र तत्र यथार्थमिव प्रतीतिं कुर्वन्ति, अतोऽविनाभावात्समयो भिन्न स एव बल सहकारी तेन समयबलेन । अत्र च समयविषयग्रहण स्मरण चोपचारात्समय समयविषय ज्ञानसहकारिणेति यावत् । सम्यक् सशयादिविलक्षणस्य परोक्षस्य परोक्षत्व जातियुक्तस्यानुभवस्य स्मरणविलक्षणज्ञानस्य साधन कारण शब्दात्मकमशब्दात्मक चेष्टालिप्यक्षरादि तत्सर्वमागम । तस्य भेदमाह ।

स द्विविध दृष्टादृष्टार्थभेदात् ॥

अर्थ प्रयोजन तत्र दृष्टप्रयोजन आगमो यथा नद्यास्तीरे फलानि सन्ति गृहान्तर्मोदकानीत्यादि, अदृष्टार्थस्तु स्वर्गकामो यजेतेत्यादि । अर्थोऽसत्पदि स्यात् सर्वशब्दानामप्रामाण्यमिति बौद्धो मन्यते त प्रत्याह ।

तत्र दृष्टार्थाना वाक्याना प्रायेण प्रवृत्तिसामर्थ्यात्प्रामाण्य गम्यते॥

प्रवृत्ति कायिकी चेष्टप्राप्त्यर्था चानिष्टपरिहारार्था च, तस्या सामर्थ्य तत्प्रयोजनप्रापकत्व, तस्मात् । अयमभिसन्धि, स्वप्रतिज्ञापितमर्थं प्रापयत्प्रत्यक्षमनुमान च प्रमाणमिति लोके प्रसिद्धत्वाद्यथा स्वीक्रियते तद्वदागमोऽपि स्वप्रत्ययप्रापितमर्थं प्रापयन् प्रमाणमित्यङ्गीकार्यम् । अन्यथा सर्वशब्दानाम्प्रामाण्ये करिष्यमाणे वर्तत इति वाक्यसमत्वे शास्त्रीयलौकिकवचनानाम

शून्यत्वेन व्यर्थप्रयोगत्वान्मौनशरणमेव वाक्य स्यात् । विवादाध्यासितानि वाक्यानि प्रमाणानि । समर्थप्रवृत्तिकारणत्वात्, प्रत्यक्षादिवदिति स्थितम् ।

**अदृष्टार्थाना पुनराप्तोक्तत्वेन ॥**

पुन शब्द प्राक्तनवाक्यप्रामाण्यसमर्थनप्रकारवैलक्षण्यज्ञापने । चोदयति ।

**कथम् ॥**

अदृष्टार्थाना प्रामाण्यनिश्चय इति । अयमभिसन्धि , न तावत् प्रवृत्तसा मर्थ्येनार्थप्रामाण्यनिश्चय , अदृष्टार्थत्वादेव । न हि स्वर्गादय इदानीमेव केना पि कृतयागेन प्राप्यन्ते । नाप्याप्तोक्तत्वेन, तस्यैव निश्चेतुमशक्यत्वात् । अत कथमदृष्टार्थाना प्रामाण्यनिश्चय इति । परिहरति ।

**[1]पुत्रकामो यजेतेत्यादिवाक्याना प्रवृत्तिसामार्थ्यात् प्रामाण्यनुमाय, तत्प्रणेतुरतीतार्थदर्शित्वेन परमाप्तत्वमवधार्य, तत्प्रणीताना सर्ववा क्यानामप्रामाण्ये कारणाभावात् , प्रामाण्यमनुमीयते ॥**

यद्यपि सर्ववेदवाक्याना प्रवृत्तिसामर्थ्यं न घटते तथापि तदेकदेशभूताना पुत्रकामो यजेत, पशुकामो यजेत, कारीर्या वृष्टिकामो यजेतेत्यादिवाक्याना तावत् प्रवृत्तिसामर्थ्यात्प्रामाण्यमनुमीयते । न च वक्तव्य पर्तितायामपीष्टौ पुत्रादर्शनात्तेपामप्रामाण्य युक्तमिति । बाहुल्येन फलोपलम्भात् । क्वचिदनु पलम्भे तु कर्मकर्तृवैगुण्यमेव कल्प्यताम्, न पुनर्वाक्यस्याप्रामाण्यम् । किंच शान्तिकपौष्टिकादिकर्मणा वैदिकाना प्राचुर्येण फलोपलम्भात्तदभिधायि वाक्याना प्रामाण्यसिद्धेस्तत्प्रणेतुरतीन्द्रियार्थद्रष्टृत्वमपि सिद्ध्यति । न तत्त्क र्मणा तत्फलाना चाऽपरिमिताना साध्यसाधनभावमस्मदादिरसर्वज्ञ प्रतिपत्तु मुपदेष्टु वा समर्थ । ननु बौद्धाद्यागमानामप्येकदेशसवादोऽस्तीति प्रामाण्य प्रसग इति । तत्परिहारायोक्तमप्रामाण्ये कारणाभावादिति । बौद्धादिवाक्याना तु सर्व क्षणिक शून्यमित्येवमादीना भूयसा बाधकमुपलभ्यत इत्यप्रामाण्यमेव युक्तमिति भाव । तत्रातीन्द्रियैकदेशसवादस्तु वेदमूलत्वादभ्युपपद्यत इति । न च वैपरीत्यमाशङ्कनीयम् । तत्रानभिहिताना शान्तिकपौष्टिकादिजातिविभाग-कर्मणामनन्ताना वेद एवोलम्भात् ।

---

१ ग. घ read before पुत्रकामो—कारीरीं निर्वपेत् वृष्टिकाम. ।

आपणे क्रीयमाणानां रत्नानामुपलम्भनात् ।
नहि तन्मूलताशङ्का रत्नाकरमहानिधे ॥
नन्वेवं पौरुषेयत्वात् प्रामाण्यप्रतिपादने ।
रागद्वेषादि कालुष्यं पुरुषेषूपलभ्यते ॥
अतोऽप्रामाण्यशङ्काऽपि निष्कलङ्का प्रसज्यते ।
वेदे प्रमाणता तस्मान्नित्यत्वेनाभ्युपेयताम् ॥

इत्याशङ्क्याह । न नित्यत्वेन ॥

नहि नित्यत्वाद्वेद प्रमाणमिति वक्तुं शक्यते । आनन्त्यकरणादीनां नित्यत्वेऽपि सद्यथार्थत्वयोत्पादनदशायामप्रमाणत्वेनानैकान्तिकत्वात् । नित्यत्वे सति, पुरुषदोषादीनामननुप्रवेशादप्रामाण्यशङ्कानिवृत्तौ वेदप्रामाण्यं स्वत एवेति चेत्, न । वेदस्य विशिष्टज्ञानसाधनत्वं प्रामाण्यं । तच्च न स्वतः समयग्रहणापेक्षणात् । अन्यथा व्याकरणादिव्युत्पत्तिरहितानां वेदश्रवणमात्रादर्थप्रतिपत्तिप्रसङ्ग । अथ तज्जनितस्य ज्ञानस्य प्रामाण्यं स्वतस्तत्रापि स्वत इति कोऽर्थः किमुत्पत्त्यपेक्षया ज्ञप्त्यपेक्षया वा । न तावत्कार्यस्य कस्यापि स्वत उत्पत्तिर्दृष्टा । अथ सम्यङ्मिथ्याबोधसाधारणकारणातिरिक्तानपेक्षया जायमानत्वं स्वतस्त्वं, न । प्रमाणाभावात् । विपर्यये तु, प्रमाणं, सम्यङ्मिथ्याबोधसाधारणकारणातिरिक्तकारणसहिताज्जायते । साधारणेषु सत्स्वप्यनुत्पद्यमानत्वात् । न चाऽसिद्धो हेतु । मिथ्याज्ञानोत्पत्तिसमये साधारणकारणसद्भावेऽपि प्रमाणानुत्पादनात् । नापि स्वत एव ज्ञप्तिः, ज्ञानस्य स्वसंवेद्यत्वासिद्धे, भाट्टैरनभ्युपगमाच्च, अर्थप्राकट्यान्यथानुपपत्त्या बोधः सिध्यति । अथ यया जायते ज्ञानं तयैव सामग्र्या प्रमाणमित्यपि ज्ञायमानत्वात्स्वतः प्रामाण्यमिति, तन्न, असिद्धत्वात् । न हि यथाकथंचिदपि ज्ञायमानो बोधः प्रमाणं जायते मिथ्याबोधस्यापि तथाप्रतीतिप्रसङ्गात्, क्वचिद्बोधे सम्यङ्मिथ्या वेति संशयाच्च । प्रामाण्यं परतो जायते । अनभ्यस्तदशायां संशयविषयत्वात्, अप्रामाण्यवत् । अथ नित्यत्वेनाप्रामाण्यशङ्काया निवृत्तौ पश्चात्प्रवृत्तिसामर्थ्येन महाजनपरिगृहीतत्वेन वा वेदस्य प्रामाण्यं सिध्यतीति चेत् । पौरुषेयत्वेऽपि समानम् । न चाप्रामाण्यशङ्कानिरासार्थं प्रमाणान्तरयोगः प्रामाण्यसाधकादेवाप्रामाण्यशङ्काया अपि निराससिद्धेरित्यलम् । नापि नित्यत्वे प्रमाणमस्तीत्याह ।

वाक्याना हि नित्यत्वे प्रमाणाभावात् । अनित्यत्वे पुनर्वाक्यत्वाद्यनेकमनुमानम् ॥

हिशब्दश्चार्थे दूषणान्तरसूचने । पदरचनात्मक हि वाक्य । न च तन्नित्यत्वे प्रमाणमस्ति । नित्यानि वेदवाक्यानि । सप्रदायाविच्छेदवत्वे सति, अस्मर्यमाणकर्तृकत्वादाकाशवादिति चेन्न ,साधनविकलत्वाद् दृष्टान्तस्य । सप्रदायाविच्छेदो हि वृद्धपरपरया यावद्वाक्यस्यानुवर्तनम् , न च तादृशमाकाशस्य सभवति । किंच 'यो धर्मशीलो जितमानरोष' इत्यादिवाक्याना बहूनामपि सप्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वमस्ति न च नित्यत्वम्, इति व्यभिचार । ननु नेदमनुमान किं त्वर्थापत्तिः । तथाहि यदि वेद पौरुषेय स्यात्तदा तदभिहितकर्मणा संध्यावदनादीना बहुवित्तव्ययायाससाध्याग्निहोत्रादीना चानुष्ठान काले कर्तु स्मरणे सति तत्प्रत्ययादेव प्रवृत्ति स्यात् , नच तदस्ति, अतोऽस्य स्मरणयोग्यस्याप्यस्मरणान्यथानुपपत्त्या वेदाना नित्यत्वमिति । तन्न । विशिष्टवृद्धपरपरानुष्ठानप्रत्ययादेव कर्त्रस्मरणेऽपि भविष्योत्तरादिष्टवृत्तेष्विव प्रवृत्त ईक्षणार्था प्रवृत्ति । वेदवाक्यानि पौरुषेयाणि । वाक्यत्वात्कालिदास वाक्यवत् , रचनारूपत्वाद्वा तन्त्ररचनावत् । पौरुषेयत्व साक्षात्परम्परया वा स्वतन्त्रपुरुषपूर्वकत्व साध्यमतो न सिद्धसाधनम् । स्वातन्त्र्य च तादृशरचनान्तरानुसन्धानशून्यस्य विशिष्टरचनाहेतुत्वम् । तच्च 'सर्वथा प्रतिषेध्या न पुरुषाणा स्वतन्त्रता' इतिवदद्भि श्रोत्रियैरप्यङ्गीकृतमन्यत्रेयल्म् ।

दूषणान्तरमाह ।

सर्वदोपलब्ध्यनुपलब्धिप्रसगश्च । विपर्यये नियामकाभावादिति ॥

वैदिकवाक्याना सर्वपदाना च नित्यत्व इति शेष । यदीन्द्रियग्रहणयोग्यत्व, तदा सर्वशब्दाना नित्यत्वे व्यापकत्वेनेंद्रियसबधाना सर्वदोपलब्धिप्रसंग । अयोग्यत्वेन वा परिमाण्वादीनामिव सर्वदानुपलब्धिप्रसग , विपर्यये कदाचिदुपलम्भलक्षणे नियामकस्य कारणस्याभावात् । परमतमाशङ्कते ।

अभिव्यंजकाभावात् तदनुपलब्धिरिति चेत् ॥

भद्भावे तु कदाचिदुपलब्धिरित्यर्थ । दूषयति ।

न । तदनिर्देशात् ॥

आदिशब्देन चेष्टालिप्यक्षरयो स्वीकार । वृद्धनैय्यायिकाभिमतमुपमानमन्त र्भावयति ।

तत्र यथा गौरेव गवय इत्युपमान शब्देऽन्तर्भूतम् ॥

अदृष्टगवयेन गवयार्थिना नागरिकेण कीदृग्गवय इति पृष्टो वनेचर प्राह यथा गौरेव गवय इति । एतत्किल वाक्य गवोपमानेन गवय ज्ञापय पृथक्प्रमाणमिति, तच्चायुक्तम् ।

दीर्घग्रीव प्रलम्बोष्ठश्चतुष्पाद्विकृताकृति ।

उष्ट्र इत्यादि वाक्यस्य पृथक्सामाण्यशक्तित ॥

मीमासकाभिमतमुपमानमाशङ्कते ।

अनेन सदृशी मदीया गौरित्युपमानमिति चेत् ॥

अदृष्टाप्रमटत पुरुषस्य गोसदृशपिण्डोपलम्भा मदीया गौरनेन सदृशीति ज्ञानमुपनायमान न तावत्प्रत्यक्ष गोपिण्डस्य तदेन्द्रियासन्निकृष्टत्वात्, नापि स्मरण गवयसादृश्यावच्छेदेन पूर्व ग्रहणाभावात्, नाप्यनुमान लिङ्गाभावात् इय गौरनेन सदृशी, अस्य तत्सदृशत्वादित्युच्यते तदा व्यधिकरणासिद्धहेतु । अनुपपद्यमानाथाऽसभवाच्च नार्थापत्ति । श दाभावयोश्चासभवादुपमानमे वेति भाव । परस्य दूषयति ।

न । तस्य स्मृतित्वात् । पूर्वमेव हि सादृश्यविशिष्ट उपलब्धो गोपिण्ड । कस्मात्, उपलब्धियोग्यत्वात् । अयोग्यत्वे वा न कदाचि दुपलभ्येताऽदृष्टवत् ॥

भूयाऽवयवसामान्य हि गोर्गवयेन सादृश्य। तच्चेन्द्रियग्रहणयोग्यत्वादाश्रय ग्रहणकाल एव गृहीतम् । प्रतियोगिग्रहणप्रतिबुद्धसस्कारस्य स्मरणमेवोत्पद्यते । पूर्वमेव च गवयसदृशा गौरुपलब्धा । किमिति तथा निश्चयो न भवती त्याशङ्क्याह ।

निर्विकल्पकेन तु पूर्व सादृश्यमुपलब्ध, तेन तदोपलब्ध्यभिमानो न भवति ॥[2]

---

१ ग adds सादृश्यस्य after योग्यत्वात्

२ ग घ add प्रथमगोपिण्डोपलम्भकलिङ्गत्वोपलम्भात् ।

तर्हि निश्चयात्मिका कथं पश्चात्स्मृतिः स्यादनुभवाकारधारित्वात्स्मृतेरित्यत्राह ।

निर्विकल्पकोपलंभाच्च संस्कारसहकारिसामर्थ्यादभावादिषु सविकल्पिका स्मृतिर्दृष्टेति ॥

इदानीं जरन्नैयायिकोपमानमनूद्य दूषयति ।

संज्ञासंज्ञिसंबंधप्रतिपत्तिरप्याप्तवचनकार्या ॥

गोसदृशो गवय इत्यतिदेशवाक्यं श्रुतवतोऽटव्यामटतो गोसदृशपिण्डदर्शनानन्तरमयं गवयनामेति संज्ञासंज्ञिसंबंधप्रतिपत्तिरुपपद्यमानोपमानफलं, गोसादृश्यविशिष्टपिण्डदर्शनं च प्रमाणमित्याचार्या उद्योतकारादयो मन्यन्ते । तच्चायुक्तम् । आप्तवचनादेवातिदेशरूपात्पूर्वमेव संज्ञासंज्ञिसंबंधज्ञानस्योत्पद्यमानत्वात् । अत्रार्थे प्रमाणमाह ।

तथा प्रश्नोत्तराभिधानादन्यप्रमाणानिर्देशाच्च ॥

कथं त्वं जानीषे गवयनामोऽयमिति केनचिदुक्तः, स तु वनेचरवचनादिति ब्रूते न पुनरुपमानेन जानामीति प्रमाणान्तरं निर्दिशति । तत्रापरमतमाशङ्कते ।

अस्य गवयशब्दः संज्ञेति प्रतिपत्तावुपमानात्सिद्धिस्तथा शब्दाश्रवणादिति चेत् ॥

गोसदृशो गवय इति वनेचरवचनाद्गवयस्य गोसादृश्यमात्रं प्रतीयते, पश्चात्तत्सादृश्यविशिष्टपिण्डदर्शने सत्यस्य पिण्डस्य गवयशब्दः संज्ञेति प्रतिपत्तौ प्रमाणान्तरभावादुपमानमेव द्रष्टव्यं । कस्मात् । तथास्य गवयशब्दः संज्ञेतिप्रकारेण शब्दस्य पूर्वमश्रवणात् । परिहर्तुमतिप्रसंगं तावद्दर्शयति ।

एवं तर्हि गौरयमित्येव संकेते कृतेऽस्य गोशब्दःसंज्ञेति प्रतिपत्तौ प्रमाणान्तरं वाच्यं । समानन्यायत्वात् । गोपिण्डान्तरेऽपि संकेतग्रहणे प्रमाणान्तराभिधानप्रसंग इति ॥

---

१ ग. and घ. drop संस्कार.

दाना पदैरभिहितानां अन्वयमात्र वाक्यार्थः । एव च संबंधाग्रहणे पदार्था प्रसिद्धिः तदप्रसिद्धौ वाक्यार्थाप्रसिद्धिरिति कथ वाक्येन संबधग्रहणमित्यर्थ । एव परोक्तदूषणमनूद्येदानीं तत्परिहार उपमानस्योपयोगमाह ।

तन्निराकरणार्थमुपमानं निदर्शनार्थत्वेन पृथगुक्तम् । यथा कार्यार्थिनोऽप्रसिद्धगवयस्य प्रसिद्धगोसादृश्यमुपादायोपमानाख्येन वाक्येन संज्ञासंज्ञिसंबंधप्रतिपत्ति. क्रियते तथा किंचिन्निमित्तमुपादाय शक्रादिपदपदार्थयोरपीति तस्मादन्यार्थत्वान्न सूत्रविरोध ॥

किंचिन्निमित्त सहस्राक्षत्व देवानामधिपतित्वमुपादाय शक्रादिपदपदार्थयोरपि संज्ञासंज्ञिसंबन्धप्रतिपत्ति' क्रियत इत्यनुवर्तते । ननूपमानस्य पृथक् प्रामाण्याभावे "अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धि ", ( गौ. सू. २-१-४२ ) " प्रसिद्धिसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्ति.' ( गौ. सू. २-१-४३) इति सूत्राभ्यां सूत्रकारेणाप्रामाण्यशङ्कापूर्वक प्रामाण्यसमर्थनं किमर्थं कृतमित्याशङ्क्याह ।

परीक्षा त्वर्थापत्तिवत्प्रमाणस्य सत प्रमाणेष्वन्तर्भावज्ञापनार्थमिति ॥

ननूपमानस्याप्यन्तर्भावमाशङ्क्य परिजहार सूत्रकार । उपमानमनुमानं " प्रत्यक्षेणाप्रत्यक्षसिद्धे ", (गौ सू. २-१-४४) परार्थमनुमानमिति चेन्न स्वयमप्यध्यवसायात् , "तथेत्युपसंहारादुपमानसिद्धेर्नाविशेष ",(गौ. सू. २ १-४६) इति तस्मात्कथमन्तर्भावसूत्रविरोधो न भवतीत्याशङ्क्याह ।

अन्तर्भावस्त्वनुमान एवास्य यथाश्रुतोऽपि निराकृतो नागम इति॥

यथाश्रुतोऽपि निराकृतोऽपीति संबन्ध । "न चतुष्ट्वमैतिह्यार्थापत्तिसंभवाभावप्रामाण्याद् (गौ सू २ २ १ " इत्यादिसूत्रेषु प्रमाणचतुष्ट्वश्रवणात्त्रित्व सूत्रविरुद्धमित्याशङ्क्याह ।

चतुष्ट्वाभिधान सूत्रेषु पञ्चत्वादिनिराकरणार्थं न त्रित्वप्रतिषेधार्थं, प्रमाणसिद्धत्वादन्तर्भावस्य ॥

परमतमाशङ्कते।

त्रित्वानभिधानादयुक्तमिति चेत् ॥

यदि सूत्रकारः प्रमाणत्रित्वमेवाभ्युपागमिष्यत्तदा क्वचिदभ्यधास्यत्। न चाभ्यधात्तस्मादयुक्तमेतदिति। परिहरति।

न। अस्य सूत्रकारस्यैवंस्वभावत्वात्सिद्धान्तमपि क्वचिन्नाभिधत्ते। यथा कृत्स्नैकदेशविकल्पादिनावयविनिराकरणे ॥

कुत एवमभिधानमित्यत्राह।

शिष्याणामूहनाशक्त्यतिशययुक्तानामधिकार इति ज्ञापनार्थम्॥

उपसंहरति।

तस्मात्स्थितमुपमान शब्देऽन्तर्भूतमिति। अर्थापत्तेरप्यनुमानेऽन्तर्भावः। अविनाभावबलेनैवार्थप्रतिपत्तिसाधनात् ॥

अनुमापकधूमवदिति शेषः। अविनाभावमेव दर्शयति।

अन्यथा नोपपद्यत इत्युक्ते सत्येवमुपपद्यत इति लभ्यते। अयमेवाविनाभाव इति ॥

परमतमाशङ्कते।

यत्र सामान्याकारेणान्वयग्रहणं नास्ति यथा मुख्यकारणत्वाप्रतिबन्धशक्त्योस्तत्रार्थापत्तिः पृथक्प्रमाणमिति चेत् ॥

मुख्यकारणत्वं नाम सकलसहकारिसाकल्ये यदनन्तरमेव कार्योत्पत्तिः। सहकारिणो दृष्टादृष्टरूपाः। न च तेषां साकल्यं क्वचिदप्यस्मदादिप्रत्यक्षं, किन्तु कार्यैकसमधिगम्यम्। तथा वह्न्यादीनां दाहकत्वादिशक्तेः प्रतिबन्धकाभावोऽपि न प्रत्यक्षः। प्रतिबन्धकानां मणिमन्त्रादीनामनन्तत्वेन तदभावस्याप्यशक्यत्वात्। अतो मुख्यकारणत्वाप्रतिबन्धशक्त्योः सामान्याकारेणान्वयग्रहणाभावादनुमानासंभवेऽर्थापत्तिरेव प्रमाणमित्यर्थः। परिहरति।

न। तत्रापि केवलव्यतिरेक्यनुमानाव्यतिरेकात्। केवलव्यतिरेकी अर्थापत्तिरिति संज्ञाभेदमात्रम् ॥

प्रयोगस्तु, कार्योत्पत्तेः पूर्वक्षणे कारणानि सकलसहकारिसमवेतानि सकल प्रतिबन्धकशून्यानि वा, अनन्तरमेव कार्योत्पादकत्वात्। यानि पुनरेवं न भवन्ति न तान्यनन्तरमेव कार्योत्पादकानि, यथा केवलतन्तवो मणिप्रतिरुद्धो वह्निर्वा।

अन्वयाभावान्नैतदनुमानमिति चेत्। न। केवलान्वयिनो हि व्यतिरेकाभावेन प्रमाणान्तरत्वप्रसङ्गादिति॥

स्पष्टम्।

अपि च प्रत्यक्षादिभेदानां कश्चिद्वैधर्म्येण भेदात्प्रमाणान्तरत्वप्रसङ्गादिति॥

सविकल्पकनिर्विकल्पकभेदेन योग्ययोगिप्रत्यक्षभेदेन वा द्विविधं प्रत्यक्षम्। कार्यकारणानुभयात्मकं त्रिविधमनुमानम्। दृष्टादृष्टार्थभेदेन द्विविधः शब्द इति।

उपसंहरति।

तस्मादविनाभाववशेनार्थप्रतिपादकत्वादर्थापत्तिरनुमानमिति॥

केनचित्सहस्रमेतदिति कथिते, शतमत्र संभवतीति ज्ञाने संभवाख्यं प्रमाणमिति केचिदाहुः। तन्निराकरोति।

बहुत्वसंख्याविषयत्वे सति अल्पसंख्याविषयस्य सर्वत्रोपलम्भानानुमानात्संभवो भिद्यत इति॥

प्रयोगस्तु, विवादपदं सहस्रं स्वसमुदायिशतवृत्ति। सहस्रत्वात्पूर्वगणितसहस्रवत्।

अभावस्य तु त्रिष्वपि यथासंभवमन्तर्भावः। तथाहि कौरवाद्यभावप्रतिपत्तिरागमादिति॥

व्यासाद्याप्तवचनात्। अभावप्रमाणत्वे वक्तव्ये विप्रतिपत्तेर्दुर्वचत्वात् तदन्यस्यैवान्तर्भावो निरूपित।

आत्मादिषु रूपाद्यभावप्रतिपत्तिरनुमानादिति॥

आत्मा रूपरहितो नियमेनाचाक्षुषप्रत्यक्षत्वाद्वायुवत्। गन्धरसरहितो, रूपरहितत्वाद्वायुवत्। स्पर्शरहितोऽस्मदादिमानसप्रत्यक्षत्वात्सुखादिवत्। आकाश रूपरसगन्धशून्य स्पर्शरहितत्वादात्मवदित्यागूह्यम्।

भूतलादिषु घटाद्यभावप्रतिपत्ति प्रत्यक्षात्। इन्द्रियव्यापारभावभावित्वादिति ॥

इन्द्रियव्यापारस्य भाव एव भवतीत्येवशीलमिन्द्रियव्यापारभावभावित्वस्य भावस्तत्त्वम् तस्मात्। तथाहि घटशून्य भूतलमित्यादिज्ञानमिन्द्रियजम्, इन्द्रियान्वयव्यतिरेकानुविधायित्वात्, रूपादिज्ञानवत्। चोदयति।

अन्यत्र तद्भावभावित्व पर्यवसितमिति चेत् ॥

अन्यत्रेत्याधारभूतलादिग्रहणम्। तथा चोक्तम्।

गृहीत्वा वस्तुसद्भाव स्मृत्वा च प्रतियोगिनम्।
मानस नास्तिताज्ञान जायतेऽक्षानपेक्षया ॥

इति। परिहरति।

न। रूपादिष्विव बाधकाभावादिति ॥

न हि रूपाद्याश्रयग्रहण एवेन्द्रियव्यापार पर्यवसितो, न रूपादिष्विति युक्तम्। घ्राणव्यापारे सत्येव निर्गन्ध कुसुममिति ज्ञानमुत्पद्यते। न च तत्रेन्द्रियव्यापारोऽन्यत्र पर्यवसित इति युक्त वक्तुम्। द्रव्यस्य चाक्षुषज्ञानविषयत्वात्।

सबधाभावो बोधक[१] इति चेत् ॥

न ह्यभावेन इन्द्रियस्सयोग समवायो वा सभवतीति भाव। परिहरति।

न। स्वपक्षपरपक्षयोरसिद्धत्वात् ॥

मीमासकस्य पक्षोऽत्र स्वपक्ष। एतदेव विवृणोति।

स्वपक्षे तावद्रूपादिष्विवापरोक्षानुभवकार्यानुमेयो योग्यताख्य सबध। परपक्षेऽपि सयुक्तविशेषणभावादिरिति ॥

आदिशब्देन सयुक्तविशेष्यभावादीना प्रत्यक्षपरिच्छेदोक्ताना स्वीकार।

---

१ घ. reads बोधक.

सयोगसमवायरहितस्य विशेषणविशेष्यभावानुपपत्तिरिति चेत् न। विशिष्टप्रत्ययेन तत्सिद्धेरिति ॥

गोमान्धनवानित्यादाविवेति भाव । ऐतिह्यमन्तर्भावयति ।

अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यमागमेऽन्तर्भूतम् ॥

अनिर्दिष्टोऽनिश्चित प्रवक्ता दृष्टत्वेन मूलभूतो यत्र तदनिर्दिष्टप्रवक्तृक प्रवादपारम्पर्यम्। सत्य चेदिति शेष । असत्य चेद प्रमाणम् । एतदुदाहरति ।

यथेह वटे यक्ष प्रतिवसतीति ॥

चेष्टा नाम प्रमाणान्तरमिति केचित् । अनुमानेऽन्तर्भूतेति चापरे । तदुभयमपि चेष्टालक्षणपूर्वकं निषेधयति ।

प्रयत्नजनिता शरीरतदवयवक्रिया चेष्टा । सा च नाट्यशास्त्रादिसमयबलेन पुरुषाभिप्रायविशेषमर्थविशेषं च गमयतीति नागमाद्भिद्यते, लिप्यक्षरादर्थप्रतिपत्तिवदिति ॥

प्रयत्नजनितेत्यनेन वाय्वादिविकारजानतहस्तादिकम्पव्यवच्छेद । नाट्यशास्त्रादीत्यादिशब्दाल्लोकव्यवहारपरिग्रह । क्रियेत्युपलक्षणम् । सयोगनाप्यर्थप्रतीतिदर्शनात् । हस्तमुखसयोगविशेषाभ्या पिपासाबुभुक्षाप्रतिपत्ति । लिपिरेवाक्षर तस्मादिति चेष्टाया प्रमाणान्तराभ्युपगम लिप्यक्षराणामपि प्रमाणान्तरत्वप्रसङ्ग इति सूचितम् । न च वक्तव्यम् लिप्यक्षरानुमिताक्षरेभ्योऽर्थप्रतिपत्तिरिति क्रमेण, प्रमाणाभावात्, चेष्टातो वा तथाप्रसङ्गात्। उपसहरति।[1]

तदेव व्यवस्थितम् । एतानि त्रीणि प्रमाणानीति ॥

प्रमाणज्ञानमात्रमेव नापूर्वसाधन किंतु तेन प्रमेय किंचिद्वस्तुतत्त्वम् तच्च किं स्यादित्यभिप्रायेण पृच्छति ।

किं पुनरेभि प्रमाणै प्रमातव्यमिति ॥

उत्तरमाह ।

---

[1] ग adds after this इति तृतीयोऽयमागमपरिच्छेद ।

उच्यते । प्रमेयमिति । किंलक्षणमिति ॥

यद्यपि पूर्वं प्रमाविषयः प्रमेयमिति लक्षणमुक्तं तथापि न प्रमेयसामान्यापेक्षयाऽय प्रश्नः किंतु तद्विशेषापेक्षयेति न विरोधः । उत्तरमाह ।

यद्विषयं ज्ञानमन्यज्ञानानुपयोगित्वेनैव निःश्रेयससाधनं भवति तत्प्रमेयम् । तदेव तत्वतो ज्ञातव्यं सर्वदा भावयितव्यं च । न तु कीटकसंख्यादि । तज्ज्ञानस्यानुपयोगित्वादिति ॥

अन्यज्ञानानुपयोगित्वेनेत्यनेन प्रमाणाद्यवच्छेदः । प्रमाणज्ञानस्यात्मादिज्ञानोपयोगित्वेन निःश्रेयससाधनत्वात् । प्रमेयं विभजते ।

तच्चतुर्विधं । हेयं, तस्य निर्वर्तकं, हानमात्यन्तिकं, तस्योपाय इति ॥

यद्यपि सूत्रकारेणात्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् (गौ. सू. १-१-९) इति द्वादशविधं प्रमेयमुक्तं तथापि तस्य चतुर्धा भाव्यमानस्यैव निःश्रेयसनिमित्तत्वमिति ज्ञापयितुं संग्रहेण चातुर्विध्यमुक्तम् । चातुर्विध्यस्यापि स्वरूपमाह ।

तत्र हेयं दुःखमनागतम् (यो. सू. २-१६) ॥

हेयं नामावश्यं दुःखत्वेन परित्याज्यम् । तच्चानागतमेव, अतीतस्योपभुक्तत्वाद्वर्तमानस्याप्युपभोगं विना प्रकारान्तरेण परिहर्तुमशक्यत्वाद् । हेयमपि विभजते ।

एकविंशतिप्रकारम् । शरीरं षडिन्द्रियाणि षड् विषयाः षड् बुद्धयः सुखं दुःखं चेति ॥

घ्राणरसनचक्षुस्त्वक्श्रोत्रमनांसि षडिन्द्रियाणि, गन्धरसरूपस्पर्शशब्दा बहिर्विषया ज्ञायमानतया सुखदुःखहेतुत्वात्, मनोविषयस्तु स्मृतिसंकल्पादिरित्येके, निद्रालस्यकामादिरित्यपरे विषयाणामिन्द्रियाणां च षड्विषयत्वाद् बुद्धयोऽपि षडित्युच्यन्ते । शरीरादीनां सुखदुःखादत्यन्तविलक्षणत्वात्कथं दुःखशब्दवाच्यत्वमित्याशङ्क्याऽऽह ।

तत्र शरीरं दुःखायतनत्वाद् दुःखम् ॥

दुःखस्यायतनं गृहं, शरीरावच्छिन्नात्मप्रदेशे हि दुःखमुत्पद्यते नान्यत्र। एतनैव च विशेषेण ज्ञायमानतया दुःखहेतुभ्यो विशेष्य शरीरं पृथगुक्तम्।

इन्द्रियाणि विषया बुद्धयश्च तत्साधनभावात् ॥

दुःखमित्यनुवर्तते।

सुखं दुःखानुषङ्गाद् दुःखम् ॥

दुःखेनानुषङ्गोऽविनाभावः सुखहेतावप्यवश्यं दुःखहेतुत्वम्। एतेनापचारादेव शरीरादिषु दुःखशब्दः प्रयुक्त इति दुःखस्वरूपतया हि भाव्यमाना शरीरादयः स्वविषयं वैराग्यहेतवो भवन्ति।

दुःखं तु बाधनापीडासंतापात्मकं मुख्यतयैव भवति ॥

दुःखशब्दवाच्यमितिशेषः।

तस्य निर्वर्तकमसाधारणकारणं अविद्यातृष्णे धर्माधर्मौ चेति ॥

तस्य गौणमुख्यभेदाभिन्नस्य दुःखस्य। निर्वर्तकमित्यस्य व्याख्या असाधारणकारणमिति। यद्यपि धर्मः सुखस्यैव कारणं तथापि सुखस्य दुःखानुषङ्गेण दुःखवर्गान्तःपातित्वाद् दुःखहेतुरुक्तः। प्रवर्तकस्य तस्यापि हेयत्वपरिज्ञानार्थमिति। अविद्यादीनां लक्षणमाह–

सम्यगध्यात्मविद्भिः प्रदर्शितार्थे विपरीतज्ञानमविद्या सह संस्कारेण ॥

आत्मन्यधिकृत्य वर्तत इत्यध्यात्मं शरीरादि। सम्यग्यथा भवति तथाऽध्यात्मं विदन्तीति सम्यगध्यात्मविदः, तैः प्रदर्शिते प्रकटीकृतेऽर्थे–

"अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम्।
चर्मावनद्धं दुर्गन्धिपूर्णं मूत्रपुरीषयोः॥
जराशोकसमाविष्टं रोगायतनमातुरं।
रजस्वलमनित्यं च भूतावासमिमं त्यजेत्॥

इत्यादिना तस्मिन्विपरीतज्ञानम्

" अमृतस्येव कुण्डानि सुखानामिव राशय ।
रतेरिव निधानानि योषित केन निर्मिता ॥

इत्येवरूपाऽविद्या । प्रलयाद्यवस्थाया विपरीतज्ञानाभावेऽपि पुन शरीराद्युत्पत्तिश्रवणात् शास्त्राभ्यासजनिततत्त्वज्ञानवतामपि रागद्वेषाद्यभिभवदर्शनादविद्याऽस्तीत्याह सह संस्कारणेति ।

पुनर्भवप्रार्थना तृष्णा ॥

पुनर्भवस्य विशिष्टशरीरादिलाभस्य प्रार्थना याच्ञा ।

सुखदु खयोरसाधारणहेतू धर्माधर्मौ ॥

सुखस्यासाधारणो मुख्यो दु खस्याकारणभूतो हेतुर्धर्म । दु खस्य पीडाया असाधारणो सुखस्यानिमित्तभूतो हेतुरधर्म ।

हानं दु खविच्छेद ॥

दु खस्यैकविंशतिभेदाभिन्नस्य विच्छेदो हानि ।

आत्यन्तिक न कदाचित्कथंचिद्दु खसम्बन्ध इत्यर्थ ॥

न कदाचित्कथंचिद् दुःखविच्छेदसद्भावेऽपि आत्यन्तिकं हानमुच्यते । विनाशाया अपि दु खव्यक्तेस्तत्त्वभावेऽपि तज्जातीयस्य व्यक्त्यन्तरस्योत्पादात् ।

तस्योपायस्तत्त्वज्ञानमात्मविषयम् ॥

यद्यपि द्वादशविधप्रमेयविषय सूत्रेऽभिहित तथाप्यात्मन प्राधान्यज्ञापनार्थमात्मविषयमित्युक्तम् । तथाहि पूर्वं शरीरादिषु हेयत्वेन ज्ञानोत्पादे तत तद्व्यतिरिक्तात्मनि च श्रुत्यादिप्रमाणनिश्चिते पश्चात्तस्यैव ज्ञानोद्भासो नि श्रेयससाधनम् । अत्र संवादिका श्रुतिं वदति ।

तथा चोक्त " आत्मा वारे द्रष्टव्य श्रोतव्यो निदिध्यासितव्य "
( बृ उ २ ४ ५ ) इति ।

श्रोतव्य श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभि ।
ज्ञात्वा च सततं ध्येय एते दर्शनहेतव ॥

चाशब्दोऽवधारणे । एते श्रवणमनननिदिध्यासनरूपा दर्शनस्यात्मविषयसाक्षात्कारस्य हेतव । आत्मध्यानं च नि श्रेयसकारणमित्यत्र श्रुतिं दर्शयति ।

तरति शोकमात्मविदिति ( छा. उ. ७-१-३ ) ॥

आत्माद्वैतज्ञानमेव निःश्रेयससाधनमिति मतनिरासार्थमाह ।

स द्विविधः परश्चापरश्चेति ॥

उभावप्येतौ मुमुक्षुणा ज्ञातव्यौ ।

तथा चोक्तम् " द्वे ब्रह्मणी वेदितव्ये परं चापरं च ॥"

आदिग्रहणात् द्वा सुपर्णा सयुजा सखाया (मु. ३-१-१) इत्यादिश्रुतिः

" द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

इति स्मृतिश्च स्वीक्रियते । तत्र परापरयोर्लक्षणं तत्र प्रमाणं चाह ।

तत्रैश्वर्यविशिष्टः संसारधर्मैरीषदप्यसंस्पृष्टः परो भगवान्महेश्वरः सर्वज्ञः सकलजगद्विधाता ॥

ऐश्वर्यं सकलपुरुषार्थाधिष्ठातृत्वं तेन विशिष्टो युक्तः । संसारधर्मैः रागद्वेषमोहदुःखादिभिरीषदपि सर्वदाप्यसंस्पृष्टः सर्वज्ञोऽनादिरिति शेषः । गच्छति विनश्यति तच्छीलं जगत्सकलस्य विनश्यतो वस्तुनो विधातेति लक्षणम् । प्रश्नपूर्वकं प्रमाणमाह ।

स कथं ज्ञातव्यः । अनुमानादागमाच्च । तथाहि विवादाध्यासितमुपलब्धिमत्कारणकम्, अभूत्वाभावित्वाद्वस्त्रादिवदिति ॥

उपलब्धिः कारणसाक्षात्कारः । न च धर्मिविशेषस्यानिर्देशात्संदिग्धाश्रयो हेतुरिति वाच्यं । साध्यविशेषाभिधानेन यत्र बुद्धिमत्पूर्वकत्वेन विवादस्तस्यैवाङ्कुरादेः पक्षीकारात् । अथेश्वरकारणत्वे साध्ये साध्यविकलो दृष्टान्तः वस्त्रादावीश्वरकारणत्वासिद्धेः व्याप्त्यसिद्धिश्च । बुद्धिमन्मात्रकारणत्वे च साध्ये विवक्षितविशेषासिद्धिः सिद्धसाध्यता च । संसारिणामेव धर्मद्वारेणाङ्कुरादिकारणत्वादित्याशङ्क्याह ।

---

१ ग कर्तृकम् । घ कर्तृपूर्वकम् ।

सामान्यव्याप्तेरनवद्यत्वेन निरकर्तुमशक्यत्वात् । ततः सामान्यसिद्धौ पारिशेष्यात्कार्यविशेषाच्च कर्तृविशेषसिद्धिः ॥ चित्रादिकार्यविशेषात्कर्तृविशेषसिद्धिवदिति ॥

सामान्यव्याप्तेः यत्कार्यं तत्स्वकारणसाक्षात्काराधारकारणकमित्येवंरूपायाः । परिशिष्यते येनासौ परिशेषः प्रसक्तप्रतिषेधः । न ह्यचेतनस्यासर्वज्ञस्य शरीरिणो वाङ्कुराद्यशेषकार्ये नैरन्तर्येण हेतुत्वं घटते, अतो विवादाध्यासितं कार्यमशरीरसर्वज्ञपूर्वकमस्मदाद्यजन्यत्वात् । यदेवंविधं साध्यं न भवति तदस्मदाद्यजन्यकार्यं न भवति यथा घटादीति व्यतिरेकी । कार्यविशेषाच्चेत्यनेनान्वयं सूचयति । तथाहि विवादपदं स्वोत्पादनप्रवीणज्ञातृकारणकं विशिष्टकार्यत्वाच्चित्रवत् । यैस्तु कैश्चिच्छरीरस्यापि व्याप्तावनुप्रवेशात्सिद्धिः स्यात्तदसिद्धौ कर्तुरप्यसिद्धिरित्युच्यते तत्र यद्यङ्कुरादिकं शरीरिकर्तृकं कार्यत्वाद्वस्त्रादिवदित्युच्यते तदा प्रत्यक्षेणैकदेशविरुद्धो हेतुः । अङ्कुराद्युत्पत्तिसमये शरीरस्यानुपलब्धिबाधितत्वात् । न च तदसिद्धौ कर्तुरप्यसिद्धिर्बाधकाभावात्, न हि कार्यत्वेन वह्न्यनुमानत्वासिद्धौ विनाशित्वस्याप्यसिद्धिरस्ति । अथ क्षित्यादिकमकार्यमकर्तृकं वा शरीराद्यजन्यत्वाद्गगनवदित्युच्यते, तत्राद्ये साध्येऽङ्कुरादिभिरनैकान्तिकत्वाद् द्वितीये तु साध्ये विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वात् शरीराद्यजन्यत्वं नाम शरीरव्यतिरिक्तहेतुजन्यत्वं हेतुः स्यात् । ततश्च साधनविकलो गगनदृष्टान्तः । किं च नदीस्रोतःपतितचम्पककर्मणोऽपि पक्षीकारात् शरीराजन्यत्वं भागासिद्धम् । अथेश्वरः शरीरी कर्तृत्वादस्मदादिवत् । तन्न, आश्रयासिद्धत्वात् तत्सिद्धौ तद्ग्राहकप्रमाणबाधः । ईश्वरः कर्ता न भवति, अशरीरत्वात्, मुक्तात्मवदित्युच्यमाने व्याप्यत्वासिद्धो हेतुः, आश्रयासिद्धो वा, प्रतिज्ञापदयोर्व्याघातो धर्मिग्राहकप्रमाणबाधश्च । किं च चम्पकः कम्पत इत्यादावशरीरस्यापि वृक्षादेः कर्तृत्वाभ्युपगमात्परैरनैकान्तिक इत्यलम् ।

एको हि रुद्रो न द्वितीयाय तस्थुः । य इमाँल्लोकानीशत ईशनीभिः (श्वे. ३-२) इत्याद्यागमाच्च ॥

ईश्वरो ज्ञातव्य इति शेषः । द्वितीयायेति सहार्थे तृतीयास्थाने चतुर्थी ।

इंद्रनीमिरिच्छादिग्रकिमिरिमौंल्लोकानीशते ऽधितिष्ठति । अपरात्मनो लक्षणमाह ।

संसारफलोपभोक्ताऽपरः ॥

न विद्यतेऽन्तः कालतो देशतः संख्यातश्चेत्यनन्तः । नित्यो व्यापकोऽसंख्यश्चेत्यर्थः । तत्सद्भावे च प्रत्यक्ष प्रमाणम् । तथा हि मनोव्यापारे सति प्रत्यात्ममहं सुखी, अहं दुःखीति प्रत्ययो दृष्टः, न चासौ शरीरावालम्बन, शरीराद्यप्रतीतावप्यन्धकारेऽहमिति प्रत्ययोत्पादात्सुखादीनां शरीराधिनाश्रयत्वात् । स्थूलोऽहं, कृशोऽहमिति तु प्रत्ययस्य चक्षुषा स्पर्शनेन वा शरीरग्रहणे सत्येव भावात्तथापि शरीरालम्बनत्वं तथाप्यहमित्यभेदप्रत्ययस्तत्र भ्रान्त एवमशरीरमिति भेदावभासेन बाधितत्वात् । प्रत्यक्षसिद्धेऽपि प्रतिपद्यमान परं प्रत्यनुमानमाह ।

स खलु बुद्ध्यादिकार्याणामाश्रयभूतोऽनुमातव्य. ॥

बुद्ध्यादिकं क्वचिदाश्रितं भावरूपकार्यत्वाद्गुणत्वाद्वा रूपादिवत् ।

व्याप्तिं दर्शयति ।

न हि कार्यमनाधारकं किंचिदुपलब्धम् ॥

सिद्धसाध्यतापरिहाराय भूतचैतन्यं निषेधति ।

न चेन्द्रियाणामाश्रयत्वं युक्तम् । उपहतेन्द्रियस्य विषयस्मरणायोगात् ॥

उपहतमिन्द्रियमुपहतेन्द्रियं, उपहतस्येन्द्रियस्य विषये स्मरणायोगप्रसंगात् । कस्मादित्यत्राह ।

अन्यानुभूतेऽर्थेऽन्यस्मरणादर्शनात् ॥

इन्द्रियमनुभवितृ न भवति, सत्कारसद्भावेऽपि सर्वदैवास्मर्तृत्वात्पाषाणादिवदस्मर्तृत्वाच्चक्षुराद्यभावेऽपि रूपादिविषये स्मरणदर्शनात् । किं चेन्द्रियाणां ज्ञानाद्याधारत्व एकस्मिन्नपि शरीरे नानाचेतनानां कदाचिद् विप्रतिपत्तिः स्यात्, तर्हि शरीरमेव चेतनमस्तित्याशङ्क्याह ।

अत एव शरीरस्यापि बाल्यकौमारयौवनादिभेदभिन्नत्वादत्वादस्म-रणम् ॥

यतोऽन्यानुभूतेऽर्थेऽन्यस्मरण न भवति, अत एव शरीरस्य स्मरण न संभवति, अतश्चानुभवितृत्वमपि नास्तीत्यर्थः। शरीरस्यापि बाल्यकौमारयौवनादिभेदभिन्नत्वात्। न च तत्रावस्थाभेदमात्रं नावस्थावद्भिन्नमिति वाच्यम्। महत्त्वभेदस्याश्रयभेदाव्यभिचाराद् महत्त्वभेदस्याश्रयभेदमूलत्वात्कुवलयामलकबिल्वादिषु परिमाणभेदवत्। बौद्धराद्धान्तेऽपि स्मरण नोपपद्यत इत्याह।

एतेन पूर्वबुद्ध्यनुभूतेऽर्थे उत्तरबुद्धेः कार्यकारणभावात्स्मरणमपास्तमन्यत्वाविशेषात् ॥

अनुभवितृस्मर्त्रोर्भेदेऽपि परस्परं कार्यकारणभावस्य विद्यमानत्वात् कारण बुद्ध्यानुभूतं चेत्कार्यबुद्धि स्मरति तदोपाध्यायानुभूत च शिष्य स्मरेत्। एतद्दूषणपरिहारायापर आह।

कार्पासे रक्ततावदिति चेत् ॥

यथा कार्पासबीजे लाक्षादिना कृता रक्तता भेदाविशेषेऽपि तद्बीजसन्तान एव पुष्पे फले वा रक्ततामुत्पादयति न पुनर्बीजान्तरसन्ताने तद्वदुपाध्याय बुद्धिजनितसंस्कारस्तस्मिन्नेव सन्ताने स्मृति जनयति न पुन शिष्ये तस्य सन्तानान्तरत्वात्। तदुक्त

'यस्मिन्नेव हि सन्ताने आहिता कर्मवासना।
फल तत्रैव बध्नाति कार्पासे रक्तता यथा ॥'

कर्म पुण्यापुण्यरूपः कर्म चासौ वासना चेति कर्मवासना तथोपलक्षणमनुभवजनितसंस्कारायाः परिहरति।

न। साधनदूषणाऽसंभवात् ॥

एतद्विवृणोति।

न स्मरति, अनुभवितुरन्यत्वात्सन्तानान्तरबुद्धिवदित्यस्य हेतो कार्पासे रक्ता वदित्यनेनासिद्धत्वाद्यन्यतमदोषस्यानुद्भावनात् । किं च समानाना कार्यकारण भाव एव सन्तान इति बौद्धाना सूत्रान्त । तादृशश्च कार्यकारणभाव शिष्योपाध्यायबुद्धीनामस्तीति प्राक्तनमेव दूषणम् । दूषणान्तरमाह ।

न च कर्पासेऽपि निरन्वयनाशोत्पादे रक्ततोपपद्यते कर्पासान्तरवत् ॥

निर्गतोऽन्वय कारणपरम्परा यत्रासौ निरन्वय स चासौ नाशश्च निरन्वय नाश । तस्मिन्सत्युत्पादो यस्य कार्यकारणभावस्य स निरन्वयनाशोत्पाद, तस्मिन्सति कर्पासे न रक्ततोपपद्यते तद्वत्व नाईति यथा कर्पासान्तरे तस्मात्त त्रापि बीजावयवाना रक्तानामनुवृत्तावेव कर्पासे रक्तोत्पद्यत । न च क्षणिक वादिन पक्षेऽनुभवितु स्वकारस्य वानुवृत्तिरस्ति तदम वे स्मरणमपि न स्यादिति भाव ।

एतेनैव क्षणिकत्व निरस्त ॥

अनुभवितुर्विनाशेऽन्यस्य स्मरण सर्वथा नापपद्यते। एतेनान्यनन "यत्सत्त क्षणिक यथा जलधर सन्तश्च भावा अमी " इत्यनुमानस्य तर्कबाधा दर्शिता । तथाहि सर्वस्य पक्षीकारे दृष्टान्ताभावादसाधारणो हेतु । विवादा ध्यासित इति पक्षीकारे जलधरस्यापि द्वित्रक्षणावस्थायित्वात्साध्यविकलो दृष्टान्त । एकदेशे प्रत्यक्षबाध दर्शयति ।

प्रत्यभिज्ञाख्येन च प्रत्यक्षेण स्फटिकादिष्वक्षणिकत्व गृह्यते ॥

' स एवाय स्फटिको यो मया व सरात्पूर्वं दृष्ट इति पूर्वापरकालकलितवस्तु ग्राहि प्रत्यक्षज्ञानमुत्पद्यत इति प्रत्यक्षैव देशविरुद्धमनुमानम्, तथा यस्याह तत्पु त्रमद्राक्ष तस्य पौत्र पश्यामीत्यत्रापि प्रत्यभिज्ञानमुत्पद्यते । परमतमाशङ्कते ।

प्रदीपादिष्विव भ्रान्तमिति चेत् ॥

पूर्वप्रज्वलिते विनष्टे पुनरन्येन प्रज्वलिते प्रदीपे स एवाय प्रदीप इति प्रत्यभिज्ञान भेदग्राहिपुरुषेण प्रत्यक्षेण बाध्यमानत्वाद्यथा भ्रान्त तथात्रापी त्यर्थ । यदि वैकस्यैव प्रदीपसन्ताने विवादाध्यासित प्रदीपो नैको भिन्न कालेऽनज त्वात्सप्रतिपन्नानेकप्रदीपवदित्यनुमानेन बाध्यमानत्वात्प्रत्यभि

[नि] यथा भ्रांतं तथा क्षणिकत्वानुमानबाधितमक्षणिकत्वप्रत्यभिज्ञानं भ्रान्तम्।
[दू]षयति।

न। एकत्र बाध्यत्वेन भ्रांतत्वे सर्वत्र भ्रांतत्वकल्पनायामतिप्रसं-
[ग]ात्॥

एकत्र नीलादिज्ञानस्य बाध्यत्वेन भ्रांतत्वे सर्वत्रापि तथाभावप्रसंग
[इ]त्यर्थः। न च सर्वमपि प्रत्यभिज्ञानं क्षणिकत्वानुमानबाधितमिति वाच्यम्।
[अ]नुमानस्य प्रागुक्तयुक्त्याऽदृष्टान्तत्वात्। भ्रांतमपि प्रत्यभिज्ञानं बौद्धस्य न
[सं]भवतीत्याह।

अनभ्युपगमाच्च। सादृश्यस्य क्षणिकत्वे भ्रांतिर्बीजाभावः॥

भ्रांतमपि प्रत्यभिज्ञानं प्रदीपादौ पूर्वोत्तरप्रदीपक्षणानां सादृश्ये स्थिरे
[स]त्येव भवति, न चास्ति क्षणिकत्ववादिनः किंचित्स्थिरम्। अतो निमित्ता-
[भा]वे नैमित्तिकस्य प्रत्यभिज्ञानस्याप्यभावः स्यादित्यर्थः। स्थायित्वे तु
[प्र]माणं क्रमकार्याण्येककारणजन्यानि कार्यत्वात्सप्रतिपन्नैककालकार्यवत्।
[उ]पसंहरति।

तस्मात्सिद्धमेतच्छरीरादिव्यतिरिक्त आत्मा व्यापको नित्य इति
[नि]त्यत्वं कुत इति चेद् भावत्वे सत्यनादित्वाद् गगनवदिति॥

परः पृच्छति।

तदेव कथं। जातमात्रे जन्मान्तरानुभवसूचकस्मरणलिंगम्य हर्षमोह-
भयशोकस्तन्याभिलाषादेरुपलंभात्॥

जातमात्रे प्राणिनीति शेषः। तदानीमेव जातस्य मृगशावादेः स्तन्यपाना-
[नु]भवो नास्तीति जन्मान्तरानुभवो ज्ञायत एव सद्योजातानां सुखप्रसादाद्य-
[नु]मिता हर्षादयः सुखदुःखसाधनदर्शनाज्जायमानास्तज्जातीयलिंगसुखदुःख-
[स]ाधनयोर्व्याप्तिस्मरणादेव भवन्तीत्यनुमातव्याः। व्यापकत्वे प्रमाणमाह।

धर्मादेराश्रयसंयोगापेक्षस्य गुरुत्वादिवदाश्रयांतरे वाय्वादौ क्रिया-
[क]र्तृत्वादणिमाद्युपेतस्य युगपदसंख्यातशरीराधिष्ठातृत्वाच्च व्यापक-
[त्]वसिद्धिः॥

' प्रयोगस्तु धर्माधर्मौ स्वाश्रयसंयुक्त एवाश्रयान्तरे क्रियां जनयत , एका
न्यत्वे सति क्रियाहेतुगुणत्वाद्गुरुत्ववत्। दुष्टदनकशरीराधिष्ठाने वै प्रमाणम

तथा चोक्तं पुराणे—

आत्मनो वै शरीराणि बहूनि मनुजेश्वर।
प्राप्य योगबलं कुर्यात्तैश्च सर्वा महीं चरेत् ॥
भुञ्जीत विषयान्कैश्चित्कैश्चिदुग्रं तपश्चरेत् ।
संहरेच्च पुनस्तानि सूर्यस्तेजोगणानिव ॥ इति ॥

श्लोके युगपदिति सम्प्रदायाद्गम्यते । उपसंहरति ।

तदेवमपरात्मतत्त्वज्ञानं परलोकसद्भावेन परलोकप्रवृत्त्युपयोगित्वा
धर्मक्षयहेतुत्वाच्च निःश्रेयसाङ्गमिति ॥

एतेन नित्यात्मज्ञानमात्मनि शाश्वतस्नेहजननद्वारेण संसारकारणमि
वदन्तो बौद्धा अपि प्रयुक्ताः । नित्यपरलोकाभावे हि

' यावज्जीवं सुखं जीवन्नास्ति मृत्योरगोचरः ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥'

इति वदतो लौकायतिकस्येव यथेष्टचेष्टाप्रसङ्गाद् अधर्मक्षयहेतुत्वे च तर
शोकमात्मवित् ' इत्यागमः प्रमाणम् । परमात्मज्ञानस्य निःश्रेयसहेत
दर्शयति ।

परमात्मतत्त्वज्ञानं च तदुपासनाङ्गत्वेनापवर्गसाधनम् ॥

तस्य परमात्मन उपासनमाराधनं तदुपासनं परमात्माऽऽराधनं तस्या
ङ्गत्वेनोपायत्वेन ।

स चोपासनाविधिः ॥

आराधनप्रकारः ।

क्लेशकर्मक्षयसमाधिलाभार्थमनुष्ठानम् ॥

क्लेशकर्मक्षयार्थं समाधिलाभार्थं चेत्युभयत्राप्यर्थशब्दसंबंध । येनकेनचिदनुष्ठानेन रागद्वेषमोहाख्या क्लेशा क्षीयन्ते परमात्मनि च चित्तैकाग्र्यलक्षण समाधि प्राप्यते तदनुष्ठान परमेश्वरोपासनविधिरिति । अत्र पतञ्जलिसूत्रसंवाद दर्शयति ।

तथा चोक्तम् । तप स्वाध्यायेश्वरप्रणिधानात्मिका क्रिया योगः ( यो. सू. २ १ ) । क्लेशतनूकरणार्थं समाधिलाभार्थश्चेति ( यो सू. २ २ ) ॥

यद्यपि पतञ्जलिसूत्रे समाधिभावनार्थ क्लेशतनूकरणार्थश्चेति पाठस्तथापि हार्थक्रममाश्रित्यान्यथा पाठ कृत । सूत्रार्थं कथयति ।

तत्रोन्मादकामादिदोषव्यपोहार्थमाध्यात्मिकादिदु खसहिष्णुत्व तप ॥

एवमेतानि विविधानि दु खानि शान्तचित्तेन नियमपूर्वक सहमानस्य यद्दु खसहिष्णुत्व निवर्तकधर्मसञ्चयमधर्मविनाश च कुरुते तत्तप इत्युच्यते । चान्द्रायणाद्यपि चानशनादिजनितदु खसहरूपत्वात्तप । निवर्तकधर्मसञ्चयाच्च योगप्रवृत्तिहेतु श्रद्धातिशयो भवति अधर्मनाशाच्चोन्मादकामव्याध्यादीना योगान्तरायाणा प्रलय , ततश्चित्तसमाधि । तपो धर्माधर्मसंचयक्षयहेतुरित्यत्र प्रमाण न स्यादिवचनम् । तथाहि

तपोमूलमिद सर्वं दैवं मानुष सुखम् ।
तपोमध्य बुधै प्रोक्त तपोऽन्त वेददर्शिभि ॥
महापातकिनश्चैव दोषाश्चाकार्यकारिण ।
तपसैव तु मुच्यन्ते तपसा किल्बिषात्तत ॥
यत्किंचिदेन कुर्वन्ति मनोवाङ्मूर्तिभिर्जना ।
तत्सर्वं निर्दहन्त्याशु तपसैव तपोधना ॥ इति ।

स्वाध्यायस्वरूपमाह ।

प्रशान्तमन्त्रस्येश्वरवाचिनोऽभ्यास स्वाध्याय ॥

ईश्वरवाचिन इति क्षुद्रसिद्धिहेतुनिरासाय । प्रशान्तग्रहण परमात्मनिष्ठन भावितव्यमिति ज्ञापनार्थम् । ईश्वरग्रहणाद्गीतादियोगशास्त्राभ्यासो वा स्वाध्याय । ईश्वरप्रणिधानमाह ।

**परमेश्वरतत्त्वस्य प्रबन्धेनानुचिन्तनमीश्वरप्रणिधानम् ॥**

प्रबन्धेन नैरन्तर्येणानुचिन्तनं स्मृति । पुष्पादिभिर्वाऽऽराधनं सर्वकर्मणां परमगुर्वाचार्याणां वा । सोऽयं तपःस्वाध्यायेश्वरप्रणिधानादिक्रिया योगसाधनत्वाद्योग इत्युक्तः स च क्लेशतनूकरणार्थं इत्युक्तः । अतः क्लेशस्वरूपमाह

**समासतो रागद्वेषमोहाः क्लेशाः । समाधिप्रत्यनीकसंसारापत्तिद्वारेण क्लेशहेतुत्वात् ॥**

आसक्तिलक्षणो रागः, कोपो द्वेषः, मिथ्याज्ञानं मोहः । समाधिप्रत्यनीकत्यादिना क्लेशशब्दवाच्यत्वे निमित्तमुक्तम् । न्यायस्तु क्लेशौ दुःखमेव । रागादयो हि समाधिविरोधित्वेन संसारापादनद्वारेण पुरुषं क्लेशयन्तीति क्लेशा उक्ताः । समासत इति पदं तु सांख्यमतनिरासाय । ते हि अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः ( यो सू २–३ ) इति ब्रुवाणाः पञ्चक्लेशानभ्युपागमन् । तच्चायुक्तम् । अस्मिताभिनिवेशयोरप्यन्तर्भावात् । तथाहि दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ( यो सू २–६ ) इत्युक्तेः पुरुषदर्शनशक्तिर्बुद्धिः, तयोर्भिन्नयोरेकात्मकतयाऽभेदेन प्रतिपत्तिर्मोह एव । तथा स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः (यो सू २–९) मरणत्रासेन नित्यं सर्वदाहं भूयासमिति योऽयं सङ्कल्पः स चाभिनिवेशः स चानादिमरणजनितदुःखानुभवारूढवासनाजन्यत्वात् स्वरसवाहीत्युक्तः । सोऽपि यथा यन्तमूढानां दृश्यते तथा ज्ञातपरस्य विदुषोऽपि रूढः प्रतीयते स च मोह एव । अवश्यंभाविनि मरणे सदा मया भूयासमेवेति ज्ञानस्यान्यथाप्रत्ययत्वाद्विदुषो मिथ्यातत्त्वादपि मोहो दृष्टः । यथा सूर्योदयादिलग्नानुमितदिग्भागस्यापि दिङ्मोह इति । यथा तपःस्वाध्यायेश्वरप्रणिधानादिक्रिया योगः क्लेशविनाशहेतुस्तथा योगाङ्गान्यपि तानि दर्शयति ।

**तथा यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टाङ्गानि ( यो सू २ २९ )**

अनुष्ठेयानीति शेषः । अङ्गानि कारणानि । यमादीनां ६

रारणत्वात् । समाधेस्तु योगात्मकस्याप्युत्तरोत्तरस्य समाधिनिचयस्य हेतुत्वा रगत्वमिति । आदावुद्दिष्टान्यमानाह ।

तत्र देशकालावस्थाभिरनियता पुरुषस्य शुद्धिवृद्धिहेतवो यमा अहिंसाब्रह्मचर्यास्तेयादयः ॥

आदिशब्देन सत्यापरिग्रहयोः परिग्रहः शुद्धिरधर्ममदमानादिक्षयः । वृद्धिर्धर्मोपचयः । तद्धेतवो ये देशादिभिरनियता अहिंसादयः, सर्वस्मिन्देशे सर्वस्मिन्काले सर्वस्यामवस्थायां न हिंस्यामि ब्रह्मचर्यं चरामि न चोरयामि नासत्यं वदामि नापि परेभ्यो गृह्णामीति सङ्कल्पपूर्वकास्ते यमाः । यदि पुनस्तीर्थादौ नो हिनस्मि ब्रह्मचर्यं चरामीति देशादिनियतास्तदा नियमा एव न यमाः ।

देशकालावस्थाद्यपेक्षिणः पुण्यहेतवः क्रियाविशेषा नियमा देवताप्रदक्षिणसन्ध्योपासनजपादयः ॥

देशविशेषापेक्षि देवताप्रदक्षिणम् । कालविशेषापेक्षि सन्ध्योपासनम् । जपक्रिया तु शुद्धावस्थामात्रापेक्षिणी । पुण्यविशेषं प्रति तु देशविशेषापेक्षिणी च, अनन्तं शिवसन्निधावित्यादिवचनात् । अन्येऽपि देशादिविशेषापेक्षिणः क्रियाविशेषा नियमा वेदितव्याः । पातञ्जलास्तु निवृत्तिलक्षणा यमा इत्याहुः । तथा चोक्तम् । अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ( यो. सू. २–३० ) । शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ( यो. सू. २–३२ ) । असत्यवचननिवृत्तिरिह सत्यं विवक्षितम् । आसनं लक्षयति ।

योगकर्मविरोधिक्लेशजयार्थः करणबन्ध आसनं पद्मकस्वस्तिकादि ॥

करणानां शरीरावयवानां पदादीनां बन्धः समम् पद्मस्वस्तिकादनेकप्रकारः । प्राणायामोपयोगी यत्तदासनं स्थिरं सुखं चोपवेशनमित्यर्थः । स च योगक्रियाविरोधिनो ये क्लेशाः क्लेशहेतवो व्याधयस्तेषां जयार्थो विनाशार्थ इति प्रयोजनोपन्यासः । प्राणायामं लक्षयति ।

कोष्ठ्यस्य वायोर्गतिविच्छेदः प्राणायामो रेचकपूरककुंभकप्रकारः॥

कोष्ठ शरीरा नदेशे भव' कोष्ठ्यो वायु श्वासप्रश्वासरूप ,तस्य या गतिविच्छेद स प्राणायाम स च त्रिविधो रेचकादिभेदेन । तत्रान्तर्गतस्य वायोर्बहिर्नि सारण रेचक । बाह्यस्य शरीरपूरण पूरक । पूरितस्य शरीरान्तधारण कुम्भक । वायुवशीकरणोपायमाह ।

स च शनै शनैर्जेतव्यो वनगजेन्द्रवत् ॥

यथा गजेन्द्र शनै शनैरुपायेन वशीक्रियमाणो महान्तमुपकार करोति बलादप्रयोगेण गृह्यमाणस्तु विनाशयति तथा वायुरपि शनैर्गृह्यमाणो महान्तमुपकार नि शेष रागादिमल विनाश्य समाधि प्रापयति । अप्रयोगेण बलाद्गृह्यमाणस्तु वातो गुल्माद्यनर्थमेव जनयतीति । प्रत्याहारमाह ।

समाधिप्रत्यनीकार्थेभ्यश्चेतस समन्ताद्व्यावर्तन प्रत्याहार ॥

समाधे प्रत्यनीका विरोधिनो ये पुत्रकलत्रादयस्तेभ्य समन्तात्सर्वेभ्यश्चेतसो व्यावर्तन व्यावृत्ति प्रत्याहार ।

प्रत्याहृते चेतसि बाह्येन्द्रियाण्यपि प्रत्याहृतानि भवन्ति चेतोऽधीनत्वात्प्रवृत्ते । प्रत्याहारेणैव च धारणालाभ ।

देशबन्धश्चित्तस्य धारणा (यो सू ३ १)॥

शरीरावयवो नाभ्यादिर्देश इत्येके, बाह्यसूर्यमण्डलादिरित्यपरे, परमात्मवान्देशो विवक्षित तदाराधनप्रवृत्तत्वान्मोक्षार्थिन इत्याचार्या । तत्र देशे चित्तस्य मनसो बन्ध प्रयत्नेन धारण निश्चलीकरण यत्ता धारणेति ।

तत्र प्रत्ययैकतानता ध्यानम् ( यो सू ३ २)॥

तत्र धारणादेशे प्रत्ययस्य ध्येयालम्बनस्यैकतानतासदृशप्रवाहो मध्ये प्रत्ययान्तरेणापरामृष्टो ध्यानम् ।

तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधि ( यो सू ३ ३ )

तदेव ध्यानमेव ध्येयाकारमात्रनिर्भास स्वरूपेण प्रत्ययात्मकेन शून्यमिव इद ध्येयमह ध्यायामीति भेदेन शून्य यदा भवति तदा समाधिरित्युच्यते एतदेव यदा—

ध्यानोत्कर्षान्निवातात्तलप्रदीपावस्थानमिवैकत्रैव चेतसोऽवस्थानं समाधिरभिधीयते ॥

उपसंहरति ।

एवमेतानि योगाङ्गानि मुमुक्षुणा सर्वेषु ब्रह्मादिस्थानेष्वनेकप्रकार दुःखभावनयाऽनभिरतिसंज्ञितं परं वैराग्यं महेश्वरे च परां भक्तिमाश्रित्यात्यन्ताभियोगेन सेवितव्यानि ॥

अनेकप्रकारेण स्वविभवातिशयितविभवदर्शितक्षयभावनया जनितानि दुःखानि तेषां भावनया ब्रह्मादिस्थानेष्वनभिरतिरपेक्षाभावस्तत् संज्ञितं तत्स्वरूपं यत्तत्परं वैराग्यम् । योगाङ्गसेवायाः फलमाह ।

ततोऽचिरेणैव कालेन भगवन्तमनौपम्यस्वभावं शिवमवितथं प्रत्यक्षतः पश्यति । तं दृष्ट्वा निरतिशयं श्रेयः प्राप्नोति ॥

निर्गतोऽतिशयो यस्मात्तन्निरतिशयं श्रेयो मोक्षः, शिवज्ञानादेव मोक्ष इत्यत्र प्रमाणं दर्शयति ।

तथाचोक्तम्

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥

(श्वे उ.६-२०) तमेव विदित्वाऽतिमृत्युमेति (श्वे. ३ ८,६ १५)। तरति शोकमात्मवित् इति ॥ (छा.)

चर्मेव चर्मवत् । यथा चर्म वेष्टयन्ति तथाऽऽकाशं यदा वेष्टयन्ति मानवास्तदा शिवं परमात्मानमविज्ञाय सर्वस्य दुःखस्यान्तो भविष्यति । उपसंहरति ।

तस्माच्छिवदर्शनान्मोक्ष इति ॥

मोक्षस्वरूपे विप्रतिपत्तेर्विद्यमानत्वात्प्रथमं पूर्वपक्षं वैशेषिकमतमादौ दर्शयति ।

कः पुनरयं मोक्षः । एके तावद्वर्णयन्ति समस्तविशेषगुणोच्छेदे महाप्रावस्थायामाकाशवदात्मनोऽत्यन्तावस्थानं मोक्ष इति ॥

अत्यन्त सर्वदावस्थानमित्यनेन प्रत्याख्याने विशेषकथनम् । वैशेषि प्रति कश्चिच्चोदयति ।

कस्मात् ॥

सुखार्थैव प्रेक्षावता प्रवृत्तिर्न स्यात्, अत सुखमात्रानुभवोऽङ्गीकार्य इ भाव । पर परिहरति ।

सुखदु खयोरविनाभावित्वेन विवेकहानानुपपत्तेरिति ॥

सुखहेतूनामवश्य दु खजनकत्वमविनाभावित्वम् । मोक्षे प्रवृत्त्यनुपपत्ते त्यस्य परिहारमाह ।

न च सुखार्थ एव प्रेक्षावता प्रवृत्ति । कण्टकादिजनितदु खपरि रार्थत्वेनापि प्रवृत्तेरुपलम्भात् ॥

इदानीमाचार्य स्वपक्ष दर्शयितुकामो वैशेषिक मत दूषयति ।

मोहावस्थात्वान्मूर्च्छाद्यवस्थावदत्र विवेकिना प्रवृत्तिर्न युक्तेत्य न्ये ॥

वैशेषिकेभ्योऽन्ये वयमिति भाव । दु खपरिहारार्थमेव प्रवृत्तिर्नोक इति दर्शयति ।

दु खे सति सुखोपभोगस्यासभवात्कण्टकादिदु खपरिहारो सुखोपभोगार्थ एवेत्यसमो दृष्टान्त ॥

स्वमते यद्यपि मुमुक्षूणा प्रवृत्ति सुखानुभवार्थाविवेकप्रवृत्तित्वात्प पञ्चप्रवृत्तिवदित्यनुमानमुक्त तथापि प्रश्नपूर्वकमागमप्रमाणमाह ।

कुतो मुक्तस्य सुखोपभोगबुद्धिरिति चेत् । आगमात् । उक्त ।
सुखमात्यन्तिक यत्र बुद्धिग्राह्यमतीन्द्रियम् ।
त वै मोक्ष विजानीयाद्दुष्प्रापमकृतात्मभिरिति ॥

तथा,—आनंदं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते ।
विज्ञानमानंदं ब्रह्मेति ( बृ. ३-९-२८ ) ॥

दुःखाभावेऽत्र सुखानन्दशब्दावुपचारेण प्रयुक्तौ, यथा भाराक्रान्तस्य वाहिकस्य तदभावे हि सुखी जातोऽहमिति प्रत्यय इत्याशङ्कायामाह ।

मुख्येऽर्थे बाधकाभावान्नोपचारकल्पना ॥

किं च भाराक्रान्तस्य तदपाये वाय्वादिसंपर्कवशात्सुखोत्पादे सत्येव सुख शब्दप्रयोगः । न पुनर्दुःखाभावेन नासंवेद्यमानो दुःखाभावः प्रवृत्त्य गमिति मुख्यसुखस्याभावे मोक्षप्रवृत्तिर्न स्यात् । सुख परोक्तमाशङ्कते ।

सुखसंवेदनयोर्नित्यत्वान्मुक्तसंसारावस्थयोरविशेषप्रसंग इति चेत् ॥

परिहरति ।

न । चक्षुर्घटयोः कुड्यादेरिव सुखतत्संवेदनयोर्विषयविषयिभावसंबंध-प्रत्यनीकस्याधर्मदुःखादेः संसारावस्थायां सद्भावात् । तन्नाशे च मुक्तावस्थायां भवति सुखसंवेदनयोः संबंध कुड्यादिनाशे चक्षुर्घटसंबंधव दित्यतो नाविशेषः ॥

संबंधप्रतिबंधकत्वमात्रेण कुड्यादिकमत्रोदाहृतम् । न पुनः कुड्यादेरिवा धर्मादेर्व्यवधायकत्व संभवति, अमूर्तत्वात् । पुनः परमतमाशङ्कते ।

संबंधस्य कृतकत्वेन कदाचिद्विनाशप्रसंग इति चेत् ॥

सुखतत्संवेदनसंबंधस्य विनाशे मुक्तस्य संसारित्वप्रसंग इति चेत् ।

परिहराति ।

न । प्रध्वंसानैकान्तिकत्वात् ॥

विवादाध्यासितः संबंधः कदाचिद्विनश्यति कादाचित्कत्वाद्घटवदित्यस्य हेतोः प्रध्वंसेनानैकान्तिकत्वादित्यर्थः । परमतमाशङ्कते ।

वस्तुत्वे सतीति चेत् ॥

संबधो द्रव्यगुणकर्मसामान्यविशेषसमवायेभ्यो बहिर्भूतस्तदन्तर्भूतो वेति विकल्प्य पक्षद्वये दूषणमाह ।

न । द्रव्यादिष्वनन्तर्भावेन तदसिद्धत्वात् ॥

तस्य वस्तुत्वस्यासिद्धत्वात् ।

तदन्तर्भावे वा समवायादिभिः सह तत्संवेदनस्य संबधो न स्यादिति ॥

द्रव्यादिषट्पदार्थान्तर्भूतो हि न समवायस्याभावस्य वा संबध इति भावः। पुन' परमतमाशङ्कते ।

अदृष्टादिवशात्कर्मकारकः विषयस्तज्जनितं ज्ञानं विषयीति चेत् ॥

परिहरति ।

न । ईश्वरज्ञानस्य नित्यस्यार्थै· सह संबधाभावप्रसंगात् ॥

अस्मदादिज्ञानस्याप्यतीतानागतादिपदार्थैः सह सबधो न स्यात् । अतीतादिपदार्थस्य कारकत्वसमवात् इत्यपि ज्ञेयम् ।

उपसहरति ।

तस्मात्कृतकत्वेऽपि नित्यसुखसंवेदनसंबंधस्य विनाशकारणाभावान्नित्यत्वं स्थितम् । तत्सिद्धमेतत् । नित्यसवेद्यमानसुखेन विशिष्टाऽऽत्यन्तिकी दुःखनिवृत्तिः पुरुषस्य मोक्ष इति ॥

इति काश्मीरिकसूर्यसूनुवासुदेवाविरचितायां न्यायसारपदपञ्चिकायामागमपरिच्छेदः समाप्तः ।

न्यायभूषणमहाम्बुधौ बुधा येऽल्पमाविचरितु न जानते ।
तत्कृते कृतिरियं मया कृता न्यायसारपदपञ्चिकाभिधा ॥
भद्र पश्येम प्रचरेम भद्रम् ॥



# PREFACE.

I scarcely thought when last year the text and commentary were published, that the text required any notes or that I should write them But from experience in the class room, I felt how difficult it is for students to grasp the subject even though the author presumes to teach the bare elements of Nyāya, yet his manner of treatment is so concise, his reasoning so compressed, and his style at times so cryptic, elliptical and dilemmatic that for even more than an average student, help of some kind or other is a real need This book is intended to meet this demand It grew out of my notes for class-lectures, and I have drawn upon various sources of information on the subject in their preparation Prominent among these are the Nyāya Sūtra of Gautama with the scholium of Vātsyāyana, Athale's Tarkasamgraha, Keshavamishra's Tarkabhāshā, Jayasimha's commentary on the Nyāyasāra published by Vidyābhūsana, Saptapadārthi edited by the late Dr Ghāte, Keith's Indian logic and atomism as also his Karma-mīmāmsā, and Sāmkhya, and the book on mediæval logic by the late Dr Satīśchandra Vidyābhūshana. I cannot express how greatly I am indebted to these different authorities

But above all, to my Guru, Mahāmahopādhyāya Vasudeva Shāstri Abhyankar, I owe a debt which it would be extremely ungrateful not to acknowledge. To him I owe

the explanation of many technical subtleties many difficult points which unaided were formidable indeed In fact all the merit that the book may have is due to him

Lastly, I must thank Mr N N Kulkarni a student of mine for going through the proofs and Dr N G Sardesai, L M & S for his readiness to undertake the publication of this work

FERGUSSON COLLEGE
*5th March, 1923*

C R DEVADHAR



# NOTES ON THE NYĀYASĀRA

## First Parichheda

(N B *all references to Pagination &c refer to the edition of 1922 of Nyayasara by the same author*)

प्रणम्यशम्भुम् Etc

From the early Bhashyakaras to the later compilers of the Syncretist School we have clear evidences of the very definitely religious tinge of the votaries who professed one or the other of the systems of Nyaya and Vaisheshika According to Raja Śekhara—*the followers of the Vaisheshika are simi*lar in their religious aspect to those of Nyaya—with the only difference that the adherents of the Nyaya are called Shaivas and those of the Vaisheshika are called Pashupatas He also describes the ascetic practices of those sectarians which equate them to the ordinary votaries of Śiva

The antiquity of this *connection is attested to by the tra*dition which is preserved by Prashastapada that it was Śiva in the shape of an owl who revealed it to Kanada the Vaisheshika system According to Prashastapada again he creator is Maheshwara a choice in which we can hardly fail to see a deliberate preference for the view that the true God is Śiva Similarly of Udyotakara we have express evidence *of the Nyaya Vartika that he was a Pashupata* Theism in the Nyaya is shown to be recognized by Vatsyāyana as well It will be found later that Bhasaravajna lays stress on the necessity of the recognized kinds of mental concentration which at last will yield the direct vision of Śiva Udayana the classical exponent of the theism of the systems demonstrates the God as Śiva

¹ The silence of Kanāda and Gautama *on these points is in*

